मण्यामप्राप्तेः कथं तत्र ऐन्द्रादिदेवताऽन्तरविधिः, कथं चित् प्राप्तावपि वा उपकारप्रत्यभावेनैव पदार्थप्राप्तेः। प्रकृते च देवतान्तरविधानेन प्राकृतोपकारस्य बाधात्, अनतिदेशात् तत्प्रत्यभावेन पशुपुरोडाशयागस्य अतिदेशासंभवात् कथं तत्र देवतान्तरविधिः इति चेत्, अत एव ऐन्द्रादिवाक्ये अन्यदेवताविशिष्टाप्राकृतपशुपुरोडाशयागस्यैव गृहमेधीये 'आज्यभागौ यजति' इतिवत् अप्राकृतकार्यार्थतया विधेयत्वा(न)ङ्गीकारात्। न च तद्वदिह पशुपुरोडाशयागान्येन प्रत्यभिज्ञाऽभावः 'यद्वै सौत्रामण्या व्यृद्धं तदेव समृद्धम्, यदन्यदेवताः पशुपुरोडाशाः अन्यदेवत्याः पशवः' इत्यर्थवादस्यैव प्रत्यभिज्ञापकत्वात्। अत अप्राकृतकार्ये एव पशुपुरोडाशाः, सुत्याऽऽदियागास्तु कर्मान्तरमेव प्राकृतकार्यापन्नम्। अत एव 'नैतेषा पशूनां पुरोडाशा विद्यन्ते, महापुरोडाशा एते पशवः' इति लिङ्गमपि पुरोडाशाः तदन्यदेवतास्मरणानि न विद्यन्ते, अपि तु अङ्गजन्यान्येव तानि इति व्याख्येयम्।

खण्डन— 'पशोः पुरोडाश उपस्करोति।'

शंकर— 'नैवं पशुपुरोडाशः।' ११. (सन्निपाती)।

* ज्योतिष्टोमे 'तीर्थे स्नाति' इत्यत्र तीर्थस्नानस्य प्रकरणादेव आरादुपकारकत्व प्राप्त पशुपुरोडाशन्यायेन दक्षिणाऽवनयनकरणार्थत्वलिङ्गेन बाधित्वा अङ्गपुरुषधर्मत्वम्। भाट्ट ३।४।९.

* पशुपुरोडाशयागः। इद दर्शपूर्णमासीय द्रव्यसंस्कारक सन्निपत्योपकारक अत्यर्थ प्रवृत्तिरूप वैदिक कर्म। बाल. पृ. ८१-८४. * पशुपुरोडाशयागः पशुयागीयदेवतासंस्कारकः। १०।१।९।१९-३५. मीको. पृ. २५१८ 'पशुपुरोडाशन्याय.' इत्यत्र द्रष्टव्यम्।

* पशुपुरोडाशयागादिः प्रसङ्गी पश्वङ्गस्य प्रयाजादेः स्वोपकारिणोऽपि अप्रयोजकः। बाल. पृ. १०८.

* पशुपुरोडाशयागादिक्रियायाः एकस्याः सन्निपत्योपकारित्वसंभवे अनपेक्षितान्येनादृष्टकल्पनाऽऽपादकस्य आरादुपकारित्वस्य अयुक्तत्वैव। सु ३।७ पृ. ६७.

* पशुपुरोडाशस्थानं वपाप्रचारात् परत.। अङ्गैरपि तस्य तत्स्थानैरेव भवितव्य प्रधानदेशत्वात्तेषाम्। भा. १२।१।२।५.

* पशुप्रकृतिलिङ्गानि आलम्भतिपरत्वं प्राणिद्रव्यकत्वं सुत्याकालत्व पशुगणत्वमित्यादीनि। बाल. पृ. ११९.

* पशुप्रभवगतिभिद्-द्रव्यकत्वं इष्टिप्रकृतिलिङ्गम्। बाल. पृ. ११९.

* पशुप्रयुक्तं गोदोहनं स्वतन्त्रपशुकामनायामेव कर्तव्यम्। भाट्ट. ४।१।२ वर्णकं ३.

* पशुप्रयोजकत्वं शकृल्लोहितयोर्नास्ति अग्नीषोमीये पशौ। ४।१।१२।२७.

* पशुबन्धः ज्योतिष्टोमोपकारकः। बा. १।३।१।४. * 'पशुबन्धस्य यज्ञक्रतोः षड् ऋत्विजः' इति कर्तृणा नियमविधि.। अर्थापत्त्या तु प्राप्तिकी प्राप्तिः (अध्वर्युः प्रतिप्रस्थाता ब्रह्मा होता आग्नीध्रः मैत्रावरुणश्च)। वि. ३।२।९. * पशुबन्धेषु सर्वेषु सर्वेष्टिषु च नारिष्ठहोमाः, तेषु च व्याहारार.। भा. ८।४।५।१८,

* पशुबन्धयाजी सर्वान् लोकानभिजयति। भा. १।२।१।८.

* पशुमन्ति त्रीणि सवनानि कर्तव्यानि। तत्रेदं वचनम् 'वपया प्रातःसवने चरन्ति पुरोडाशेन माध्यंदिने सवने अङ्गैस्तृतीयसवने' इति। टुप्. १२।२।१२।३२. * पशुमत्सु चातुर्मास्येषु परिधिरुभयधर्मा। तेन यूपपरिधिधर्मविरोधे परिधिधर्म एव कर्तव्यः, न यूपधर्माः। सत्वक्त्वम् उपशयत्व च परिधिधर्माः। यूपधर्मश्च तक्षणम्, उच्छ्रयणम्, निखननमिति। १२।१।११।२७-२९. * पशुमत्सु चातुर्मास्येषु परिधि. परिधिधर्मा यूपधर्मा चेति उभयधर्मा स्यात्। तत्र अविरुद्धाः यूपधर्माः पवमानीभिः अद्भिः प्रोक्षणम्, अञ्जनम्, परिव्याणमिति। परिधिधर्माः इध्मसंनहनम्, समार्जनम्, स्रुहा अञ्जनम्, आम्नाआनयमिति। १२।२।१०।२६. * पशुमत्सु चातुर्मास्येषु 'परिधौ पशू नियुञ्जीत' इति यूपधर्म. पशुनियोजन परिधौ कर्तव्यम्। ९।२।१२। परिधिश्चात्र मध्यमः स्थूल.। परिधेश्च तक्षणोच्छ्रायौ न कर्तव्यौ। अञ्जनादयस्तु कर्तव्या एव। मैत्रे तु 'यूपायाज्यमानाय' इत्येव ब्रूयात्, न तु 'परिधयेऽज्यमानाय' इति। वि. ९।२।१३.

अतश्च पाशुकं कर्म पुरोडाशेषु प्रवर्तते, न विकल्पः इति सिद्धान्तः । के.

* पशु–(अग्नीषोमीय–सवनीय)साधारण्यं रशना-धर्माणाम् । ३।६।१०।३१.

* पशुसोमयोः प्रदेयप्रकृतित्वेनैव साधनता । सु. पृ. ७९७.

पशुसोमाधिकरणम् । 'अग्नीषोमीयं पशु-मालभेत', 'सोमेन यजेत' इति आलम्भन यागश्च अपूर्वं कर्म विधीयते ॥

द्रव्यसंयोगाच्चोदना पशुसोमयोः प्रकरणे ह्यनर्थको द्रव्यसंयोगो नहि तस्य गुणार्थेन । २।२।६।१७ ॥

भाष्यम्— ज्योतिष्टोमे श्रूयते— 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । तत्रेदमाम्नन्ति 'हृदय स्याग्रेऽवद्यति अथ जिह्वाया अथ वक्षसः' इति । तथा 'सोमेन यजेत' इति, तथा 'ऐन्द्रवायवं गृह्णाति', 'मैत्रावरुणं गृह्णाति', 'आश्विनं गृह्णाति' इत्येवमादि । तत्र संशयः, किमवद्यतिगृह्णातिचोदितानां कर्मणामेव आलम्भतियजती समुदायस्य अनुवदितारौ, अथ अपूर्वयोः कर्मणोर्विधातारौ इति । किं तावत् प्राप्तम् ? समुदायस्येति । कुतः ? ये इमे अवद्यतियजतिभ्यां कर्मणी विधीयेते यतामिति चिन्त्येते, एवमेव ते अवद्यतिगृह्णातिभ्यामव-गमिते । न च अवगमितोऽर्थो विधीयते । हृदयादींस्तु पशुशब्देन अनुवदति, सोमशब्देन च रसम् । तस्मात् 'सोमेन यजेत' इत्यनुवादो यजतिः । यजेत स्वर्गकामो यजन्ते यजन्ते इति फलगुणसम्बन्धार्थः । 'पशुमालभेत' इति च आलम्भतिरग्नीषोमसम्बन्धार्थः । अपि च 'दशै-तानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति' इति समुच्चयो दृश्यते । तथा 'आश्विनो दशमो गृह्यते तृतीयो हूयते' इति च क्रमः । यदि च अपूर्वौ यागौ विधीयेते, ■ ऐन्द्रवायवादिभिर्देवता विधीयेरन्, ता एकार्थाः सत्यो विकल्प्येरन्, यथा 'खादिरे बध्नाति' 'पालाशे बध्नाति' 'रौहितके बध्नाति' इति । तत्र क्रमसमुच्चय-दर्शने नोपपद्येयाताम् । अथ पुनरस्मिन् समुदायवचने यजतौ सम्यगेतदवकल्पते भवति । तस्मात् समुदाया-नुवादौ । एवं प्राप्ते, ब्रूमः । अपूर्वयोः कर्मणोः विधानचोदने पशुसोमयोः । कुतः ? सोमशब्दः क्षीरिण्यां लतायां प्रसिद्धो न रसे । आकृतिवचनो हि सोमशब्दो न व्यक्तिवचनः । तथा शृङ्गिणि पुच्छवति लोमशे चतुष्पदि द्रव्यविशेषे पशुशब्दं आकृतिवचनमुपचरन्ति । न च एवमाकृतिकद्रव्याः प्रकृता यागा विद्यन्ते, येषा-मिमौ समुदायस्यानुवदितारौ भवेयाताम् । ननु पशु-विकारो हृदयादिः पशुशब्देन अग्नीषोमसम्बन्धार्थमनूद्यते । नैतदेवम् । पशुरग्नीषोमीयो भवति इत्येतावदुच्यते, नायं प्रकृतो हृदयादिः पशुरिति । तत्र यदि लौकिकस्य पशोर्ग्रहणम्, ततो मुख्यः पशुशब्दः । यदि हृदयादेः, ततो जघन्यो विकारमन्त्वेन । तथा सोमशब्दोऽपि विकारमन्त्वेन अनुवादः स्यात् । तस्मात् अपूर्वे कर्मणी विधीयेयाताम् नानुवादौ । अथ ऐन्द्रवायवादिषु प्रकृतेषु यागेषु कथं विधीयेतेति । उच्यते । न सा शक्या वाक्येन ऐन्द्रवायवी ज्ञातुम् । श्रुत्या हि स ऐन्द्रवायवः । तस्मात् द्रव्यसंयोगवचनः प्रकृतेषु यागेष्वपि सत्सु विधातुं अनु-वदितुं वा न शक्नुवन् अनर्थकः स्यात् । तस्मादपूर्व-कर्मणी विधीयेयाताम्, न प्रकृतानामनुवादौ इति ।

वा— पशोः दुष्प्रतिपादतरत्वात् पूर्वाभिधानम् । द्वौ चात्र शब्दौ समुदायानुवादत्वेन आशङ्क्येते पशु-शब्दः तदग्नीषोमसम्बन्धानुमितश्च यजिः । ईदृशं हि पुरो-डाशं अग्नानुमितैकदेशनिष्पन्नम्, यत् 'अग्नीषोमीयेण पशुना यजेत' इति । तत्र किं हृदयादीनां पशुशब्द-अनुवादः अवद्यत्यनुमितानां यागानां च यजिः, उत अपूर्वः पशुः यागश्च विधीयते, तत्र इतरे गुणविधय इति सन्दिह्यते । तथा ऐन्द्रवायवादिवाक्यैः द्रव्यदेवता-सम्बन्धानुमिता यागाः तद्द्रव्यश्च सोमरसः किं यजतिसोम-शब्दाभ्यामनूद्यते किंवा उत्पत्त्युक्तं कर्म विधीयते इति । 'किमवद्यतिगृह्णातिभ्यां चोदितानाम्' इति (भाष्यम्) । अनयोः यागपर्यायत्वाभावात् तत्सम्बन्धानु-मितानां तद्गुणाख्यातप्रत्ययविहितानां वा इत्येतत्प्रदर्शनार्थं तद्भाष्यम् । आलम्भतिरपि च तदनुमितयागोपलक्षणार्थः । अथवा अवद्यती नैव यागानुवाद इत्युपन्यस्यते । कथं तर्हि ? तदाश्रितस्य सम्पर्कस्य आलम्भतिरनुवादः तद्-

द्वारेणैव च प्रत्यवदान देवतासंयोगात्, तावता च यागाना मनुमानम्, उत पशुसंयुक्तः एको यागोऽनुमीयते इति। तथा सोमेऽपि अयमेव यागो यद्देवतोद्देशेन द्रव्यग्रहणमिति। तथा सति यथाश्रुतेनैव भाष्येण सदेहोपन्यासः।

तत्र पौर्णमासीवदेव समुदायानुवादत्वम्। तथाहि **'यथाऽऽग्नेयादिवाक्यानां न प्राग् यागानुमानतः। स्वार्थपर्यवसायित्वं तथा सोमेऽपि गम्यताम्॥'** नहि ऐन्द्रवायव इत्यादिद्रव्यदेवतासंयोग. अननुमिते यागे निराकाङ्क्षी न भवति। न च अपरिपूर्णं वाक्य वाक्यान्तरमाकाङ्क्षति, येन अनुमानवेलायाम् 'सोमेन यजेत' इत्ययमनुप्रविशेत्। एतद्विहितस्य वा देवताविरहात् अरूपस्य तद्वाक्यैः देवता विधीयते। यदा तु तैः कल्पितो यागि. तदा नैव यागस्य यागान्तर रूप भवति इति बलात् प्रकृतानुवादत्वमापद्यते। यश्चात्र पक्षे विशिष्टविध्याश्रयणदोषः स मत्पक्षेऽपि अविशिष्टः, सोमद्रव्यकयागविधानात्। अपि च, तत्र इह च, ऐन्द्रवायवादिवाक्येषु च। मत्पक्षे तु तेष्वेव केवलेषु इति विशेषः। किञ्च, **'यादृशं द्रव्यसंबद्धं भवान् कर्म विधित्सति। तादृशस्याविधेयत्वमनन्तरमुदाहृतम्॥'** पञ्चैव ह्येवं गुणे श्रूयमाणे विधिशक्तिः संक्रामति इति अग्निहोत्रे (२।२।५) अभिहितम्। अतो न कर्मानुवादबुद्धिरपैति इत्यनुवादत्व यजे। नन सोमशब्देन द्रव्यमेव गृह्णता सामान्याश्रित नियम्यते। अथवा 'सोम क्रीणाति' 'सोममभिषुणोति' 'सोम पावयति' इत्यादिभिः प्राकरणिकैर्गुणवाक्यैः सोमसंबद्धे कल्पिते प्रकृतिचोदना. प्रवृत्ता. इति सोमो न विधीयते। ततश्च स्वाभाविककरणत्वयुक्तयागनामानाधिकरण्यात् 'तत्प्रख्य चान्यशास्त्रम्' (१।४।३।४) इति नामधेयो भवति। ननु ज्योतिष्टोमः इत्यपर नामधेयमस्त्येव। यदि इदमपि भविष्यति किं नो बाध्यते? तथा च याज्ञिकाना व्यवहारेषु नामद्वयमुपलभामहे। समस्तवाक्यानुवादस्य तु तदेव प्रयोजनम्, यत् प्रत्येकवाक्यगतैकत्वेऽपजनन नाम। तस्मादनुवाद इति। भवेदत्र द्रव्यदेवतासंयोगादेवम्, पशौ तु 'पशुमालभेत' इत्येतस्योद्देशेन देवतासहितहृदयादिद्रव्यसंयोगिना अव्यतिना कथ यागविधानम्, कथ वा हृदयाद्यनुवादः पशुग्रहणेन इति वक्तव्यम्। उच्यते। **'यथैव पशुसामान्ये मन्त्राच्छागः प्रतीयते। तथैव हृदयादीनां समासौ प्रकृतिर्मत.॥'** हृदयादिभिः प्रकृतिद्रव्ये अपेक्षिते मन्त्रवर्णाच्छागो लब्धे तदन्तर्गतं पशुत्व तावदनूद्यते। तत्र तु देवताया विहिताया यागो विधीयता नाम। अथवा 'सानाय्य वा तत्प्रभवत्वात्' इत्यनेनैव न्यायेन अप्रमवधिः सारूप्यात् सानाय्यावधतिप्रकृति.। न च दर्शपूर्णमासयागद्रव्यसंस्कारार्थ. प्रसिद्धः। तत्र यदि हृदयादीनि यागद्रव्याणि, तत. तत्संयोगभाञ्जि भवन्ति, नान्यथा। तेन यथैव पूतीकानामभिषवसंबन्धे श्रूयमाणे तद्वृत्त्या न्यायाऽनुपपत्त्या यागसगति अश्रूयमाणाऽपि गम्यते, तथा अत्रेत्युपेक्ष्यमाणे यागमनुमाय तदनुपपत्तेर्यागोऽप्यस्तीति गम्यते, तथा अनुमिताना न प्रतिद्रव्यमवस्थिताना समुदायोऽनूद्यते। साधारणश्चाय तत्रापि आनुमानिकयागाभ्युपगम इति न एवेन असाक्षद्दौर्बल्यम्। सोमयागकल्पे तुल्यार्थाना इन्द्रवाय्वादीना विकल्पे सति क्रमसमुच्चय दर्शन नोपपद्यते। पश्य, **'यथैकसन्धनार्थत्वात्पलाश खदिरादय.। तत्संबन्धे विकल्पन्ते यागेऽस्मिन् देवतास्तथा॥'** मम तु भिन्नवाक्यविषयत्वात् देवताना यागाना च अदृष्टार्थाना युगपदेकशब्देन पक्षे विधानात् उपपत्स्यते। पशावपि 'हृदयस्याग्रेऽवद्यति, अथ जिह्वाया.' इति क्रमदर्शनम्, 'एकादश वै पशोरवदानानि' इति न समुच्चयदर्शन सदपि नोपपन्नम्, एकयागत्वेऽपि समस्तपशुसाधनत्वेन तदुपपत्तेः। नहि हृदयादिषु असमुच्चीयमानेषु उत्पत्तिवाक्यश्रुतेन समस्तेन पशुना इष्ट स्यात्। यस्मात् मम वचनान्तरक्लेशापत्तेरपत्ते, तस्मात् यतिरिक्तेन सर्वेण यष्टव्य इति न्याय.। सोमे तु नैव समस्तचोदनोत्पत्तौ अस्ति इति उदाह्रियते। तस्मात् समुदायानुवादो। इति प्राप्ते, अभिधीयते। **'प्रवृत्तप्रत्यभिज्ञानं वाक्ये यत्रोपलक्ष्यते। तत्र स्यादनुवादत्वं न चात्रैवं प्रतीयते॥'** यदि पौर्णमासीवत् अशेषरूपप्रत्यभिज्ञान भवेत्, ततोऽनुवाद. कल्प्येत। यदि वा दर्शितमानस्य अनुवादत्वमिष्यते, तत. परित्यक्तविशेषणोऽनुवाद इत्यव धार्येत। अत्र पुन. प्रकृता हृदयादिद्रव्यका रसद्रव्यकाश्च

यागाः। इमौ च पशुसोमशब्दौ। न चैवं सति प्रथमि- शब्दमस्ति इत्यनुशब्दत्वसंभवः। तत्र एतत् स्यात् विकारेषु प्रकृतिवदुपचारात् हृदयादिष्वेव रसे च पशु- सोमशब्दौ वर्त्स्येते इति। तन्न, विना कारणेन लक्षणा- ऽनाश्रयणात्। विस्पष्टे हि परशब्दसामानाधिकरण्ये सति अनन्यथासंभवे च लक्षणावृत्तिः शब्दो भवति। न चैतदुभयमप्यस्ति। तस्य हि मुख्यं पशुसोमद्रव्यं यागा- न्तरं विधातुम्। न च प्रकृतेषु अनाश्रयमाणौ एतौ शब्दौ नोपपद्येते। तेन यद्यपि तावत् अवदानिगृह्याभ्यां चोदिता यागाः, तथापि कर्मान्तरत्वप्रसङ्गः। कस्मात् तेष्वेव यागेषु स्वद्रव्यप्रकृत्यपेक्षेषु पशुसोमौ न विधीयेते, तदाह– 'श्रुत्या हि रस ऐन्द्रवायवः' इति। पशु- स्तावत् देवतानिधिसत्त्वात् अनुत्पत्तिवाक्ये सति अशक्य एव विधातुम्, इति नैव उपलभ्यते। सोमस्तावदपि वाक्यविशेषात् श्रौतत्वविरोधे सति न लभ्यते। कथं पुनः अनुपात्तद्रव्यविशेषेषु ऐन्द्रवायवादिविधिषु रसस्य श्रौतत्वम्, अभिधानरूपो यत्सौ, ततश्च वाक्यप्राप्त- स्यैव बलीयसी स्यात्। उच्यते। 'श्रुत्यैव द्रव्य- सम्बन्धो देवतातद्धितैः कृतः। अधिकारेण तस्यैव केवलेष्टा विशेष्यता॥' 'गुणश्चापूर्वसंयोगे' इत्यत्राधि- करणे विस्तरेणाभिधास्यते। यथा तद्धितश्रुत्या वाक्य- प्रकरणादिगम्यस्य विनापत्यैव अन्य-शब्दवाच्यस्य देवतासम्बन्धे कृते कोऽसौ द्रव्यविशेष इत्यपेक्षाया वाक्य- प्रकरणादिभिः उद्भाति केवलम्, न तु तैरेव देवता- सम्बन्ध इति।

किंच 'उत्पत्तिवाक्यशिष्टश्च रसो, वाक्या- न्तराङ्गना। प्रकृतापेक्षिणान्येन दुर्बलेनापऽबाध्यते॥' ततश्च गुणादपि ते भेदं प्राप्नोति। तत्परिहारं तु इदम्। कुतः? 'यथैवाष्टाकपालादौ श्रौतेऽपि सति वाक्यतः। व्रीह्यादयो विधीयन्ते तथा सोमो विधास्यते॥' विधीयमानं हि द्रव्यं विरुद्धं बाध्यते नानुगुणम्। अनुगुणश्च सोमो रसस्य प्रकृत्यपेक्षिणः सादृश्येन सम्बन्धात्। यथा 'आग्नेयोऽष्टाकपालः' इति श्रुतिविहितेऽपि अष्टाकपाले सति व्रीहियवौ विधीयमानौ न विरुध्येते, पुरोडाशतापेक्षितप्रकृतिरूपत्वात्। नहि व्रीहीन् गृह्णन् अष्टाकपालं न करोति। तेन चात्र न कर्मान्तरता। तथाऽत्र न सोमे गृह्यमाणे रसः परित्यक्तः इत्यविरो- धात् पूर्ववत् समानः न गुणो भेदकः स्यात्। अपि च सिद्धान्तेऽपि एतत् तुल्यम्। अनभिषुतलताऽऽदाना- नभ्युपगमात्। तत्र यथा तत्र रसप्रकृतिर्लब्धा भवति, तथा पूर्वपक्षेऽपि भविष्यति। अपि च विरुद्धतरं तत्र- पद्यते। कथम्? 'उत्पत्तिवचनात् सिद्धा लता चैवात्र साधनम्। न सा वाक्यान्तरैः पश्चाद् रसी- भवितुमर्हति॥' रसस्य प्रकृत्या विना निष्पत्त्यभावात् आकाङ्क्षितः प्रकृतिसम्बन्धो वाक्यान्तरेणापि क्रियमाणो न विरुध्येत। प्रकृतेस्तु अविरुद्धाया एव सामर्थ्यादन- पेक्षिता विकारापत्तिः उत्पत्तिवाक्यविरोधिनी न युक्ता वाक्यान्तरैः कर्तुम्। तस्मात् मीमांसकमुख्यानुवृत्तिकत्वात् अनुष्ठानेन गुणविधित्वं सम्प्रदायानुवादमात्रं निरा- कार्यम्, पशौ तन्मात्रेणापि सिद्धेः। सोमे तु व्रीहि- वाक्यानुरूपत्वाशङ्कामपि निराकर्तुं उत्तरं सूत्रं प्रस्तो- तव्यम्।

अथवा भङ्क्त्वैव पूर्वोपपत्तिं उत्तरेणैव निर्णयः। पूर्वसूत्रेण वा पूर्वपक्षं परिगृह्य उत्तरं तु सूत्रं तुशब्द- व्यावर्त्यमानं उत्तरपक्षे योजयितव्यम्। कथं पुनः द्रव्यसंयोगात् इत्यनेन पूर्वपक्षोऽभिधीयते। तदुच्यते। 'हृदयस्याग्रेऽवद्यति' 'ऐन्द्रवायवं गृह्णाति' इत्येताः किं दध्यादिवत् गुणार्थाः श्रुतयः, उतश्च उत्पत्ति- वाक्यचिचोदनार्थत्वम्, उत एता एव कर्मचोदना इति। किं प्राप्तम्? नैताः पूर्ववत् गुणार्थाः पुनः- श्रुतयः, किन्तु उत्पत्तिचोदनाः। कथम्? द्रव्यसंयोगात् हृदयादिद्रव्यसंयोगात् तैरेव वाक्यैः चोदना पशुसोमयोः। किं कारणम्? इतरथा हि प्रकरणेन हृदयादिसंयोगो यागाङ्गत्वं प्रतिपद्येत। न चासौ तस्य गुणार्थेन संभवति, उत्पत्तिवाक्यशिष्टगुणान्तरविरोधात्। अथवा पूर्वोक्तेन न्यायेन अन्यत एव पशुसोमयोः सिद्धत्वात् अस्मिन् प्रकरणे पुनरनर्थको द्रव्यसंयोगः स्वपक्षे भवेत्। मम तु सोमशब्दो नामधेयम्, अग्नीषोमीयवाक्यं च देवता- विधानार्थमिति न किञ्चिदनर्थकम्। तस्मात् प्रकृति- गृह्णातिप्रयुक्तैव यागोत्पत्तिचोदना स्यात्।

**अचोदकाश्च संस्काराः ॥ १८ ॥**

**भाष्यम्**— एवं तावत् प्रकृतेषु सत्स्वपि नानुवादौ इत्युक्तम्। अथेदानीं प्रकृता एव यागा न सन्तीत्युच्यते। कुतः ? अचोदकाः संस्काराः। न च ऐन्द्रवायवादिभि यागा विधीयन्ते। तेन ग्रहणमुपकल्पनमात्रं दृष्टार्थम्। उपकल्प्यमाने तु देवतासंकीर्तनमदृष्टाय। अतः 'ऐन्द्रवायवं गृह्णाति' इति इन्द्रवायुभ्यां संकल्पयति इति एवावगतं भवति। तत्र यागमन्तरेण संकल्पयति इत्येतन्न युज्यते इति यागः कल्प्येत। स एवाम्नातो यागो यस्मिन् सति संकल्पोऽवकल्प्येत। तस्मान्न 'ऐन्द्रवायवं गृह्णाति' इत्येवमादिभिः यागा विधीयेरन्। प्रकृतानां यागानाम् अभावात् न समुदायशब्दो भवति। तथा आलम्भति शब्द इति।

**वा**— नैव पशौ समुदायानुवादौ, 'चोदना वाऽप्रकृतत्वात्' (२।२।४।१०) इत्येतस्मादेव हेतोः। कथं प्रकृता न संभवन्ति ? यतः अवघातिवत्तत्र न यागानां चोदना, किं तर्हि ? संस्कारमात्रविषयः, तन्मात्रपर्यवसानात्। तन्मात्रपर्यवसायिनि वाक्ये निष्प्रमाणकत्वात् न अश्रुतयागकल्पनं शक्यम्। एवं हि स कल्प्यमानः कल्प्येत, 'देवतोद्देशेन गृहीतं द्रव्यं न यावत् यागेन सम्बध्यते न तावत् तद्देवतं द्रव्यं कृतं भवति' इति। तत्र यदैव अन्यथाऽनुपपत्त्या यागं कल्पयितुमारभ्यते तदैव सन्निहितः प्रत्यक्षो यागः अविशेषात् सर्वान् द्रव्यदेवतासंयोगान् उपपादयितुमुपतिष्ठन् यागान्तरकल्पनाप्रमाणं निरुणद्धि। तस्मिंश्चाम्नातः तस्य समुदायानुवादो भविष्यति॥

यदुक्तं अग्नेयादिवत् नापरिकल्पिते यागे वाक्यान्तरापेक्षेति। तत्र ब्रूमः। 'पूर्वापरविनियोगेन वाक्यं सर्वत्र पूर्यते। तदलाभे त्वपूर्णत्वं तल्लाभे वाक्यसङ्गतिः ॥' 'आग्नेयोऽष्टाकपालो भवति' इति न यागादन्यः पूर्वापरः प्रतीयते इति प्राक् तदनुमानात् अपरिपूर्णं वाक्यम्। इह तु 'ऐन्द्रवायवं गृह्णाति' इति ग्रहणभावनायां पुरुषो नियुज्यते। तत्र प्रागपि यागानुमानात् अस्ति निर्विषयः इति समाप्यते वाक्यम्। इदं तु अन्यत्, यत् तत्र परमपि किञ्चिदपेक्ष्यते। सर्वेण हि वाक्यं स्वार्थे पर्यवसिते अर्थान्तरापेक्षा न जहाति, न च तावता तदसमाप्तं भवति। या तु अस्य अपेक्षा, सा वाक्यान्तरेण पूरयिष्यते इत्यसमाप्तत्वात् न वाक्यान्तरसम्बन्धं न सहते। तेन यागानुमानवेलायां प्रति वाक्यम् 'सोमेन यजेत' इत्यस्योपस्थानं न विरुध्यते। 'आग्नेयोऽष्टाकपालः' इति तु श्रुते अनुपस्थितयागत्वात् प्राक् यजेः न किञ्चित् विहितं न किञ्चित् प्रतिषिद्धम्, इति असमाप्ते वाक्ये, वाक्यान्तरे चानपेक्षिते यजिः अनुमीयमानः न वाक्यान्तरगतः सम्बध्यते इति वैषम्यम्। अथ यदुक्तं उत्पत्तिशिष्टयोः पशुसोमयोः न वाक्यान्तरगता विकारापत्तिर्युक्ता इति, तत्र ब्रूमः।

'**द्रव्येणात्यन्तभिन्नेन सह चिन्त्यं बलाबलम्।**
**हृदयादिरसद्वारमन्नस्य पशुसोमयोः ॥**' यत्र श्रौतं चिन्नौ पशुसोमौ परित्यज्य अत्यन्तव्यतिरिक्तं किञ्चित् द्रव्यं विधीयते, ततो विरोधः स्यात्। इह तु पशुनैव हृदयादिद्वारेण यागः साध्यते, सोमेन च रसद्वारेण। न च हविर्निर्वर्तनापेक्षया कश्चिद्विरोधः। पशुसोमौ हि यागसाधनत्वेन चोद्यमानौ हविर्निर्वर्तकत्वमाकाङ्क्षतः। तत्र च रसहृदयादिनिष्पत्तिद्वारेण इत्येव कथम्भावः पूर्यते। तेन अनुग्राहकत्वात् न तत्कल्पने विरोधापत्तिः। यत्तु प्राकृतैर्वैकृतैश्च धर्मैरेव प्राप्तत्वात् इह द्रव्ययोगोऽनर्थक इति। तत्रापि 'अचोदकाश्च संस्काराः' इत्ययमुत्तरम्। नहि ते विधयः सोमस्य पशोर्वा चोदकाः। किं तर्हि ? तयोरेव संस्कारकाः। तेन चोदितस्य द्रव्यस्य यथाकथञ्चित् उपादानेन यागसाधनत्वे प्रसक्ते क्रयोपात्तेन अभिषवादिसंस्कृतेन च साधयितव्यमिति विधीयते। न च मन्त्रगणस्यात्यन्ताविहितद्रव्यप्रापणसामर्थ्यम्, पशुचोदनाविहितस्य तु सदेहाप्ययनमात्रमुपयुज्यते। न चायमपि एकान्तेन यागमनुमापयति, विनाऽपि तेन तन्मात्रतया लोके वेदे चोपपत्तेः। द्रव्यदेवतासंयोगस्तु न कथञ्चित् यागाद्विना सिध्यति इत्यनुमानवैषम्यम्। न च सान्नाय्यवत् पशू चोदितौ, अर्थग्रहीतत्वात्, यतस्तद्वत् प्राप्तिरपि स्यात्। न चास्य यागद्रव्यत्वं इतिकर्तव्यता, येन तदतिदिश्येत। न च ईदृशोऽर्थे सामान्यतोदृष्टं प्रक्रमते। पूर्वोक्ताभिधानापूर्वप्रकरणाभ्यां वाक्यप्रकरणाभ्यां तात्पर्यनिश्चयात् इत्यसमानता। सोमवाक्येऽपि निदिष्ट

विधौ प्रत्यक्षोपात्ते सति आनुमानिकाभ्यासादेरनुत्थानम् । न च ऐन्द्राग्नादिवाक्येऽपि अष्टाकपालादिवाक्येष्विव गुणवाक्यत्वेऽपि वाक्यभेदः । कुतः ?
'विधेयानेकभावेऽपि देवताग्रहणात्मना । क्रियाऽन्तरप्रसादेन विशिष्टविधिसंभवः ॥' गवन्ते हि इन्द्राग्न्यादिविशिष्टग्रहणभावनाविधिः व्याश्रयितुम् । अर्थे प्राप्ते वा ग्रहणे समासोपात्तैर्देवतानिधानमात्रमविरुद्धम् । प्रकरणग्राह्यश्च प्रधानसम्बन्धः, इति गुणवाक्यत्वेऽपि अदोषः । तस्मात् एषा सत्स्वरत्वात् अन्यतो यागमपेक्षमाणा अविरोधोऽन्येन यागविधिः । एवं च सति ज्योतिष्टोमेन इत्येकत्वं मुख्यमेव भवति । न च सोमशब्दः वशेषेण अनर्थकं द्वितीयनामत्वं प्रतिपत्स्यते । न च आग्नावैष्णवीयपूर्वपक्षवदवाः सम्भवनावत्सु गुणः अनर्थकः आर्थिको भविष्यति । तेन चोदना पशुसोमयो इति सिद्धम् ।

तद्भेदात् कर्मणोऽभ्यासो द्रव्यपृथक्त्वादनर्थकं हि स्यात् भेदो द्रव्यगुणीभावात् ॥ १९ ॥

भाष्यम् — पशौ कृता कथा दशमे पुनश्चरिष्यति । सोमे इदानीं वर्तते, कथं क्रमसमुच्चयाविति । इन्द्रवाय्वाद्याः देवता नैव श्रूयन्ते, इन्द्रवायुभ्यां यागो निर्वर्तयितव्य, मित्रावरुणाभ्यां यागो निर्वर्तयितव्य इति । यदि एवमश्रोष्यन्त याग प्रति देवता व्यकल्पिष्यन्त । केनचिद्धि दैवतेन तदा यागो निर्वर्तते इति विहितमभविष्यत् । अथ पुनरिमा अदृष्टार्थं ग्रहणसंस्कारं प्रति देवता विधीयन्ते, तत इन्द्रवायुग्रहणात् अन्यो मित्रावरुणग्रहः, तेन गृह्यतो तद्ग्रहणादृष्टात् अदृष्टान्तरमुत्पादयति । एवमन्येष्वपि ग्रहेषु । तस्मात् समुच्चय' । ग्रहणं च नियतपरिमाणेषु ऊर्ध्वपात्रेषु प्रदेयमात्रेषु नियतपरिमाणेषु उदककालेषु संस्कृतस्य दशमुष्टिपरिमितस्य कृत्स्नस्य सोमस्य नावकल्पते । यद्यपि चावकल्पेत, तथापि नित्यविहितानां देवतानां विकल्पपक्षे नानर्थकं प्रयोगवचनो मा भावि इति अवश्यमनुग्रहणमेव न्याय्यम् । कृत्स्नग्रहणे हि तदेव इन्द्रवायुभ्यां सकल्पेत तदेव मित्रावरुणाभ्याम् इति नावकल्पेत । तस्मात् कलशभेदात् पृथगवस्थितः सोमः नानादैवतत्वादेव नैकेन शक्यः कर्तुम् । न च ग्रसति देवताभागे देवताभ्यः शक्यते प्रकल्पयितुम् । तस्मात् अपरं यथावकल्पिता देवता यष्टव्याः । तासु चेज्यमानासु 'ज्योतिष्टोमेन यजेत' इति श्रुतो यागो निर्वृत्त एव भवति, न देवतान्तरमाकाङ्क्षति । कृत्स्नेन च दशमुष्टिना सोमेन यागः श्रुतः, सोऽसति अभ्यासे नावकल्पते इति अर्थात् ॥ गुणो भविष्यति इति अभ्यसितव्यो यागः । नहि भवत्यन्नः सर्वाभिर्देवताभिः सोम च सोमेन संपन्नो भविष्यति । तस्मिंश्चाभ्यस्यमाने क्रमसमुच्चयौ युक्तावेव भवतः । तस्मात् सर्वोद्देशेन गुणत एवेति ।

वा— क्रमसमुच्चययोः पशौ अपरिचोदितत्वात् कृता कथा । पयोरेकहविष्ट्वं ( १०।७।१।१ ) इत्यत्र वक्ष्यति । किं समस्तादवदातव्यम्, उत प्रत्यङ्गम्, उतैकस्मात् अथवा हृदयादिभ्यः परिगणितेभ्य इति । सोमे तु परिचोदनापरिहारः अभिधीयते । 'वाक्येन यदि यागस्य श्रूयेरन् देवताः पृथक् । व्यकल्पिष्यन्त, सर्वास्तु युगपद्यागसंगताः ॥ यत्र वाक्येन संबन्धो निरपेक्षेण चोद्यते । तत्र तुल्यार्थवर्तित्वान्नोपपन्नः समुच्चयः ॥' यदि ऐन्द्रवायवेन यजेत, इन्द्रवायुभ्यां याग निर्वर्तयेत् इति वा श्रूयेत ततः अन्योन्यनिरपेक्षैः वाक्यैः तुल्यार्थत्वेन आगमाद्वा विकल्पभाजो भवेयुः । इमाः पुनर्ग्रहणसंबद्धाः, श्रुताः प्रकरणेन यागसम्बन्धं प्रतिपद्यन्ते । न च प्रकरणव्यापारः पर्यायः( सः १ ), येन अन्योन्यनिरपेक्षाः भवेयुः । संनिधानेषु हि युगपत् इतिकर्तव्यतात्वेन गृहीतेषु तद्वत् देवताः तन्मात्रेणावगतसंबन्धाः प्रकरणिना यागेन आकाङ्क्षिताः युगपदेव संबध्यन्ते । तत्र नाम विकल्पो युज्यते, यत्र इतरेतरनिरपेक्षा समानार्थे नियुज्यन्ते । किं कारणम् ? 'प्रत्येकं हि समर्थत्वं वाक्यादेवावधारितम् । सापेक्षत्वे निषद्धेऽतेनैवं सर्वं विकल्पते ॥' न त्विह प्रत्येक ज्योतिष्टोमनिर्वर्तनसामर्थ्यं इन्द्रवाय्वादीनामवगम्यते, तद्वदिति-योजकाभावात् । सत्यपि च प्रत्येकं यागनिर्वर्तनसामर्थ्ये तद्विनियोज्योतिष्टोमनिर्वृत्तिः कथञ्चन सिध्यति इति नैव प्रत्येक तुल्यार्थत्वम् । प्रत्येकं कृत्स्नार्थीश व्रीहियवादयो विकल्पन्ते । सवनशेषिणो हि न प्रत्यर्थसंबन्धाः

स्वनस्वेन वाक्येन विनियुज्यते । ननु 'ऐन्द्रवायवं गृह्णाति' इति वाक्यमेव विनियोजकमुपलभ्यते । अतश्च 'मैत्रावरुणम्' इत्यस्य पूर्वनिरपेक्षमेव देवताविधिसामर्थ्यं विज्ञायते । सत्यम्, ग्रहणं प्रति अन्योन्यनिरपेक्षा विधीयते । न तु तत्रैकार्थत्वम् अदृष्टार्थत्वात् । कथम् दृष्टार्थत्वमिति चेत्, उच्यते । 'पूर्वं प्रधानसंबद्धं संस्कारे श्रूयते यदि । तद् दृष्टार्थं विना तेन, यदि याऽसौ न सिध्यति ॥' यदि हि प्रथमं यागेन संबद्धा सती देवता निर्वापावहननादिष्विव ग्रहणेषु पुनः श्रूयेत्, यदि वा ताभिर्विना ग्रहणमेव न निर्वर्तेत ततस्तत्र श्रवणं दृष्टार्थं अनागतस्मृतिरूपेण कल्प्येत । न तु इन्द्रवाय्वादयः प्रथमं ज्योतिष्टोमे श्रुता । नापि तदभावेन ग्रहणं सिध्यति । तत्र एव सत्यपि यत् देवतायुक्तं ग्रहणं कर्तव्यमिति श्रूयते तत्र अदृष्टाद्वते न किञ्चित् प्रयोजनमस्ति । ननु च यागस्यैता देवता भविष्यन्तीति कृत्वा विनाऽपि प्रथमविनियोगेन तद्विषयस्मृत्यर्थं विज्ञायते । नैतदस्ति । कुतः । 'सर्वेण विधिवेलायां प्रयोजनमपेक्ष्यते । तद्वेलायामतः कल्प्यो दृष्टादृष्टार्थनिर्णयः ॥' 'ऐन्द्रवायवं गृह्णाति' इत्येतद्वाक्यप्रवृत्तिकाले 'किं प्रयोजनम्' इत्यपेक्षा भवति । तत्र यद्यपि प्रकरणवशात् इतिकर्तव्यतात्मकस्य ग्रहणस्य यागसंबन्धः कथमपि भवति इत्यवधार्यते, तथापि देवतानामयमयुक्तत्वात् अक्रियारूपत्वाच्च न प्रकरणेन यागार्थता विज्ञायते इत्यवश्यं यागसंबन्धनिरपेक्षं तावत् ग्रहणं प्रति प्रयोजनं कल्प्यमिति अदृष्टकल्पनमापद्यते । तस्मिंस्तु शास्त्रवेलायां अवधारिते, यदि अनुष्ठानकाले दृष्टमपि अनुनिष्पादि भवति, येन तन्निवार्यते । न तु तेन शास्त्रप्रवृत्तिं प्रति बध्यते । तेन प्रतिवाक्यं देवतासंयोगानामदृष्टार्थत्वात् समुच्चयः । तत्र 'न च वसमभिसंबन्धेन क्रियते तत्तन्नपार्थकम्' इत्यनेन न्यायेन ( भा ३।२।२।१२ पृ ४७२ ) भेदेन श्रुता देवता ग्रहणसंबद्धा नोपपद्यते यदि ग्रहणं नानात्वेन इति प्रतिदेवतं सोमो ग्रहीतव्यः । एष तावत् सूत्रार्थ – तद्भेदात् देवतासंयोगभेदात् ग्रहणकर्मणः अभ्यासः देवतासंयुक्तग्रहण संस्कार्यं पृथक्त्वात् अनर्थकं हि प्रयोगान्तरश्रवणमननुष्ठीयमानमनर्थकं स्यात् । तेन ग्रहणस्य भेदः संस्कार्यं द्रव्यं प्रति गुणभावात् । एतद्देवतावन्ति ग्रहणानि यागप्रकमात् न यागादृते देवतार्थं द्रव्यं संस्कर्तुं शक्नुवन्ति इत्येवमपेक्षिते भविष्यति कश्चिद्यागः, य एतानि द्रव्याणि देवताभ्यः संप्रदास्यतीति । यागोऽपि च अविहितदेवताकः श्रुतिलिङ्गवाक्यैः देवतामलभमानः प्रकरणस्य च ईदृशे वस्तुनि अक्रियात्मके व्यापाराभावात् ग्रहणेषु तावत् विनियोजकं भवति । तानि च अन्यार्थविधानात् भिन्नादृष्टसंबन्धित्वाच्च युगपत् गृह्यन्ते तद्वशेन देवतानामपि समुच्चयसिद्धि । ननु प्रकरणगृहीतानामपि एकार्थानां पुरोडाशविभागमन्त्रप्रभृतीनामिष्यत एव विकल्पः । सत्यमिष्ट, न तु तत्र प्रकरणं केवलमाश्रियते । लिङ्गानुमितया श्रुत्या प्रत्येकं विभागाङ्गत्वं विज्ञाते दर्शपूर्णमासविभागार्थत्वमात्रं प्रकरणाद्भवति, विभागान्तरेऽपि आनर्थक्यात् । तत्र यद्यपि दर्शपूर्णमासौ समुच्चयेन गृहीत, तथापि न विभागद्वारनिरपेक्षयो सामर्थ्यमस्ति । यच्च द्वारं तत् विकल्पेनावरुद्धम्, न समुच्चयगम्यम् । इह पुनर्विपरीतमेतत् । यान्येव हि द्वाराणि ग्रहणानि तेष्वेव देवता समुच्चिता । तत्र प्रत्येकं ग्रहणयोग्योऽपि द्वारसमर्पणवशेन प्रवर्तमानः किमिदानीं करिष्यति ? । ननु ग्रहणानामपि प्रत्येकं द्रव्यसंस्कारद्वारेण देवतासमर्पणेन च प्रधानोपकारसामर्थ्यमस्ति इति विभागमन्त्रवत् विकल्पेन भवितव्यम् । भवेदेवम्, यदि पूर्वं नानादेवतो यागोऽवगतः स्यात्, ततस्तदर्थोऽयं द्रव्यप्रकल्पनभेद इत्यवगम्यते न तु असौ एवमवगत इति प्रकल्पनभेदान्नाना अदृष्टार्थ विज्ञायते । अवश्यं च गुणात् प्रकल्पनानि भेत्स्यन्ति । नहि एकस्मिन् प्रकल्पने युगपत् पर्यायेण वा देवता संकल्पयितुं शक्यन्ते । यौगपद्यं तावत् क्रमवर्तित्वात् वाचा नैव शक्यम् । अदेवताभूत एव समुदायः संकल्पितः स्यात् । नहि इन्द्रवाय्वादिसमुदाये देवतात्वं केन चित् प्रतिपदोत्पत्तिविहितैः प्रत्येकं प्रतीयमानत्वात् । न च क्रमेणोद्देशः । कथम् ? 'द्रव्यस्य गृह्यमाणस्य देवतोद्देशचोदना । न चैकां देवतां मुक्त्वा तदुद्देशस्य संभवः ॥' यदि तु

प्रागूर्ध्वं वा ग्रहणात् उद्दिशेत् अचोदितमेव कुर्यात् । किञ्च 'एतस्या इति संकल्प उद्देशोऽत्राभिधीयते । अन्यस्मिन् क्रियमाणे च पूर्वस्तत्र विपद्यते ॥' यद् द्रव्यं इन्द्रायामुष्या दातव्यमिति संकल्पितम्, तस्य त्यक्तप्रायत्वात् अनीशो यजमानः कथमिव यष्यति मिथ्यारवणाभ्यासेनैव इति । । तमेवानुद्दिश्य देवतान्तर संकल्पे क्रियमाणे पूर्वदेवताया. तद्द्रव्यमाच्छिन्न स्यात् । पूर्वसंकल्पालोचनेन वा नैयोत्तरः पारमार्थिकत्वं प्रतिपद्येत इति अनलव्यवहारमात्रमेव अनुष्ठीयेत, न चोदनार्थः । तेनावश्य यावद्देवतं ग्रहणभेदः कर्तव्य. । किञ्च 'शक्यते चागृहीतेऽपि यत्र कश्चिद्व्यवस्थितेः । द्रव्येऽस्मिन् देवतोद्देशमित्यदृष्टार्थता विधेः ॥' देवतोद्देशस्त्यागारम्भो हि यागः, शक्यते च पूर्वमानावस्थेनापि सोमेन कर्तुं तत्काल ॥ सर्वावस्थाविशुक्तेनापि निर्वर्तयितुमिति अदोषेत्तत्संस्कारविधानमदृष्टार्थम् । यत्र तु पुरोडाशादि द्रव्यं चोद्यते तत्र यावत् अवहन्त्यादिविधानम्, तत्सर्वं हविष्पर्यर्थत्वात् दृष्टार्थं भवति । न च ग्रहणमन्तरेण सोमेन यष्टव्यमिति उत्पत्तिचोदना, तन्मात्रपर्यवसानात् । तेन आत्मीयाहवभेदनिर्वृत्त्यर्थमपि ग्रहणानि समुपेतव्यानि । 'दश मुष्टीर्मिमीते' इति च प्रकरणे परिमाण श्रुतम् । अत 'सोमेन यजेत' इत्येतद्वचनमेव विशेष्यते 'दशमुष्टिना सोमेन यजेत' इति । स च नियतपरिमाणेन द्रव्येणाभिषुत अल्पपरिमाणेषु भिन्नेषु ग्रहपात्रेषु न ग्रहणभेदमन्तरेण शक्यते ग्रहीतुं इति भेदेन गृह्यते । तथाऽवस्थेन न यागो निर्वर्तयितव्य । सोऽपि अनभ्यस्त तथाऽवस्थित न शक्नोति सर्वं संभावयितुम्, इति प्रयोजनवशेन अभ्यस्यते । तेन तत्रापि भूयम् । तद्भेदात् प्रकल्पितसोमभेदात् आनन्तर्येण, अभ्यासस्वीकृतद्रव्यपृथक्त्वात् अदोषमयज्यमान अनर्थक स्यात् । अतः उत्पत्तौ सकृत् श्रुतस्यापि वाक्यान्तरप्रकल्पितावस्थौत्पत्तिकद्रव्यगुणत्ववशेन अनुष्ठानभेदः । तद्धि द्रव्यमवश्य यथागृहीतमेव दातव्यम् । पुनरेकीकरणे पूर्वकृतग्रहणभेदवैयर्थ्यप्रसङ्गात् । न च यथासंकल्पिताः स्वैर्भागै. देवता. संभत्स्येरन् । न च त्यागकाले सर्वाः संकल्पयितुं शक्यन्ते, येनाभ्यासधीने. सर्वोद्देशेन सकृदेव सर्वं द्रव्यं मिश्रीकृत दीयेत । तथाकृतेऽपि च भागभक्त. प्राप्नोत्येव । प्रकल्पिते च भागनाशान्ते वचनादृते अवश्य परिहार्यो संकल्पनित. । तस्मात् यथासंकल्पितस्य प्रदानात् सर्वदेवतासमुच्चये सति उपपन्नमेतत् 'दशैतानध्वर्युः प्रातःसवने ग्रहान् गृह्णाति' 'आश्विनो दशमो गृह्यते' 'तं तृतीय जुहोति' इति । तेन सिद्धमेककर्मत्वम् ।

प्रयोजनं पूर्वपक्षे सोमविकारेषु एकस्यैव ग्रहस्य धर्मैः सकृदनुष्ठानेन भवितव्यम् । सिद्धान्ते तु प्रकृतिवत् व्यमेवानुष्ठानमिति ।

**संस्कारस्तु न भिद्येत परार्थत्वाद् द्रव्यस्य गुणभूतत्वात् । २८ ॥**

भाष्यम्— यदप्युच्यते यथा 'खादिरे बध्नाति', 'पालाशे बध्नाति' इति खादिरादय. संस्कारे विकल्प्यन्ते, तद्वत् देवता विकल्पयिष्यन्ते इति । तन्न युक्तम् । तत्र संस्कारमात्रनिर्वर्तयितु खादिरादयः श्रूयन्ते । यदि च इन्द्रवाय्वाद्या अपि ग्रहदेवताः यागमभिनिर्वर्तयितु श्रूयेरन्, तत अत्रापि विकल्प. स्यात् । न तु एता यागे श्रुता । तस्मात् समुच्चीयेरन् ।

शा— 'ऐन्द्रवायवमित्यादिद्रव्यदैवतसंगतेः । याग एव विधातव्यो गृह्यतौ नहि देवता ॥' त्रेधा पूर्व पक्ष., सोमशब्देन द्रव्यं विधीयते, प्रकृतिद्रव्य वा नामधेय वेति । सर्वथाऽपि आलभतियजती समुदायानुवादः । इति प्राप्तेऽभिधीयते । 'द्रव्यान्तरेण संयोगाभावानुवादोऽवकल्पते । तेन यागविधौ एतावन्त्ये गुणविधायिनः ॥'

सोम— दध्यादिवाक्येषु गुणाकृष्टशक्तिकत्वात् न कर्मविधि, किन्तु कर्मानुवादेन गुणविधि. इत्युक्ते तद्वदेव पशुसोमवाक्ययोरपि ॥ कर्मविधिः इति प्रत्यवस्थानात् संगति. । यद्वा दध्यादिवाक्येषु कर्मविध्यभावेन अग्निहोत्रादिवाक्ययोः अनुवादाभावेऽपि हृदयादि-ऐन्द्रवायवादिवाक्येषु कर्मविध्यसम्भवेन पशुसोमवाक्ययो. अनुवादो भवति इति प्रत्यवस्थानात् संगतिः ।

प्रयोजनं पूर्वपक्षे ऐन्द्रवायवादिवाक्यानां यागविधायकत्वे तस्य यागस्य स्वार्थतया विनियुक्तदेवताकत्वा-

भावलक्षणान्यत्वरसामानाद् विश्वजिदादिष्विव 'अयत्वादु तु सोमस्य' इति न्यायप्रवृत्ति । सिद्धान्ते तु तदप्रवृत्ति । पशूदाहरणे तु पूर्वपक्षे यागभेदाद् विकृतिषु एकस्यैव यागस्य अतिदेशः न लभ्यते हृदयादिना तु एकेन यागः, सिद्धान्ते सर्वे । यद्वा पूर्वपक्षे 'सारस्वतं मेषम्' 'ऐन्द्रं वृषभम्' इत्यादिषु विशसनादिकमकृत्वा श्रुतमेषादि वार्तीयेन द्रव्येण अविकृतेनैव यागः कर्तव्यः । विकृतिषु निरूढादीनामनुपदिष्टत्वात् अभिघातादिविधिभिश्चोत्पत्ति शिष्टत्वात् न स्वीकर्तुं शक्यते इत्यादिरूपेण परपराऽऽश्रयणे श्रुतिविरोधस्योक्तत्वेन तन्यायेन मेषवृषभादिष्वपि श्रुतमेषादिनाऽऽविश्वसाधनत्वविरोधप्रसङ्गेन विशसनादीनां चोदकतः प्राप्त्यसम्भवात् । सिद्धान्ते तु प्रकृतावेव निरूढानामपि परपराऽऽश्रयणेऽपि श्रुतद्रव्यस्य अविरोधात् चोदकानुसारात् हृदयादिभिः यागः इत्यादि ऊह्यम् ।

**सूत्रार्थस्तु**— पशुसोमवाक्ययोः द्रव्यान्तरसंयोगात् कर्मचोदनाप्रकरणे प्रकृतहृदयाद्यैन्द्रवायवादिवाक्यविहिते यागे सति हि पशुसोमवाक्ययोः द्रव्यसंयोगः अनर्थकः स्यात्, नहि तस्य गुणार्थेन सम्भव इति ।

**वि**— 'यजत्यालभतीत्येतावनुवादौ विधी उत ।, गृह्णात्यवद्यतीत्याभ्यां विहितेऽर्थेऽनुवादिनौ ॥, नानु वादोऽपूर्वत्वादेः यागालम्भोक्तौ विधी । ग्रहणे सोमसंस्कारोऽवदाने पशुसंस्क्रिया ॥'

**भाट्ट**— 'अग्नीषोमीयं पशुमालभेत' इति श्रुतम्, तथा 'सोमेन यजेत' इति च । तत्र आग्नेयविधिप्रकारस्यासम्भवात् न पृथक् कर्मविधित्वम् । अपि तु समुदायानुवादत्वमेव । कर्मप्राप्तिस्तु पशौ 'हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः' इत्यादिभिः । अत्र हि श्रुतविशिष्टपशुसाध्ये यागे हृदयादीनां साधनत्वानुपपत्तेः न तदुद्देशेन अवदानादिसंस्कारविधिः । अतो विहितानां हृदयावदानानां पशुप्रभवद्रव्यप्रकृतत्वेन तत्प्रभवत्वात् साक्षादेवावदानप्रकृतिकत्वावगमे तदाश्रयत्वादेव हृदयादीनां यागसाधनत्वस्य पूर्वोक्तानुमानात् यागाद् हृदयादिभिः एव विधीयन्ते । तथा च तद्गतया आलम्भतिना अनूद्य अग्नीषोमदेवता विधीयते । पशुपदं च हृदयादीनां छागप्रकृतिकत्वस्य मत्वर्थात् प्रातः तत् लक्षणया हृदयादिपरम् । अथवा हृदयादिवाक्यविहितावदानाश्रितत्वेनैव आरम्भ विना शक्त्या अनूद्य पशुशब्दलक्षितहृदयादीनां द्रव्येण देवताप्रकरणे कृते तान्तरे यागाः देवतासम्बन्धकल्पितत्वेनैव विधिना विधीयन्ते । सर्वथा पशुपदं समुदायानुवादः । तथा सोमेऽपि 'ऐन्द्रवायवं गृह्णाति' 'मैत्रावरुणं गृह्णाति' इत्यादिवाक्ये द्रव्यदेवतासम्बन्धानुमितयागविधानं ग्रहणे देवताऽन्वयानुपपत्तेः । द्रव्यं च 'अंशुना धारया गृह्णाति' इति प्रकृतं धाराद्रव्यं द्रव्यं तद्धितोपात्तम् । सोमवाक्ये तु तत्प्रकृतित्वेन सोमलता विधिः श्रीहिवत् । 'सोममभिषुणोति' इत्यादिसंस्कारविध्यन्यथाऽनुपपत्त्यैव वा 'अध्वर्युं वृणीते' इतिवत् सोमवत्ते सोमपदं नामधेयम् । सर्वथा यजिः समुदायानुवादः । तत्प्रयोजनं चास्मिन् पक्षे सोमपशुयागमात्रानुवादात् अस्मदनुष्ठानानामपि फलसम्बन्धः । ज्योतिष्टोमपदं च वैश्वदेवादिवत् गौणम् । समुदायानुवादाभावे हि तद्वशात् अस्मदनुष्ठानानामेव यागानां फलसम्बन्धापत्तिः । तेषामेव ज्योतीरूपस्तोमसम्बन्धात् । सिद्धान्ते तु यागस्यैकत्वात् फलसम्बन्धविना अभ्यासरूपत्वापत्ते निर्नामिकानां त्वाच्छिन्नस्यैव फलसम्बन्धः । ज्योतिष्टोमपदे बहुव्रीहिसमासरूपसमुदायाश्रयरूपः । अतः समुदायानुवादौ एतौ । इति प्राप्ते, पशुपदे हृदयादिलक्षणायां प्रमाणाभावात् तेनैव विशिष्टयागविधिः । हृदयादिवाक्यैश्च हृदयाद्युद्देशेन संस्कारमात्रम् । पशोश्च न साक्षात् हविष्ट्वेन विधानम् । किन्तु विशसनावदानादिविधिरूपतात्पर्यग्राहकानुरोधेन हृदयादिप्रकृतित्वेनैव । प्रकृतत्वस्य साक्षादिव परम्परयाऽपि तात्पर्यग्राहके सति उपपत्तेः । अत एव अतिदेशप्राप्तावदानस्य लोपेऽपि हृदयादीनां हविष्ट्वसिद्ध्यर्थं तदितराङ्गानां हविष्ट्वपरिसंख्यार्थश्चेति कौस्तुभे द्रष्टव्यम् । सोमेऽपि न ऐन्द्रवायवादिवाक्ये यागविधिः, गौरवात् । किन्तु देवताविशिष्टग्रहणस्यैव तद्वितेनाद्रव्योद्देशेन विधिः । समर्पति च देवतात्वस्य निरूपका मन्त्रेण ग्रहणे वैशिष्ट्यायोगेऽपि ग्रहणकालीनोद्देश्य कर्मीभूतत्वस्तुतित्वसम्बन्धेन ग्रहणे वैशिष्ट्यम् । अत्र देवतायाः ग्रहणप्रभूतायाः अपि यागापेक्षायाः सोमवाक्य विहितयागस्यैव देवताऽपेक्षस्य तयाऽऽकाङ्क्षाभावकल्पनात्

त्वागम् । सोमपदं तु संस्कारविध्यन्वयाऽनुपपत्त्या समस्तप्राप्तिसत्त्वेऽपि सकृद्व्यावृत्तिफलकसोमनियमार्थं न विरुध्यते । यथा न एव सति ग्रहणाना समुच्चयो यागस्य च प्रतिग्रहणमावृत्तिः तथा सर्वं कौस्तुभे एव निरूपितम् । प्रयोजनं पशुविकारे हृदयादिवाक्यानामप्रकृतित्वात् नैकादशावदानगणप्राप्तिः पूर्वपक्षे, सिद्धान्ते सा इति द्रष्टव्यम् । सोमे व्यागकल्पसिद्धिरेव ।

मण्डन— 'सोमेन (इत्यत्र) यागविधिरन्य गुणो महोक्तिः ।'

शंकर—'पशुसोमयोस्तथा' (यज्ञनिर्णि. यागनिधि.) ।

* पशुसोमाधिकरणं अभ्यासापवादत्वेन उपस्थितम् । कौ. २।२।७।२० पृ २३२, * पशुसोमाधिकरण आघारसिद्धेऽमाधिकरणयत्युदाहरणम् । २।२।६।१७ पृ. २०७ * पौर्णमास्यधिकरणा (२।२।३) पवाद पशुसोमाधिकरणम् । वा. २।१।१।१. * पशुसोमाधिकरणे भट्टसोमेश्वरेण शेषपरिसंख्योदाहरणमुक्तम् "न्यायात् सर्वावयवप्राप्तावपि 'एकादश वै पशोरवदानानि' इत्यस्य अनन्यप्रयोजनत्वात् अवदानान्तरपरिसंख्याऽर्थत्वाभ्युपगमेन दाशमिक सिद्धान्त." इति, (१०।७।१।१–२) तदेतदस्माभि दशमे 'पशोरेवहविष्ट्वम्' इत्यत्रोऽग्रिमेऽधिकरणे दूषितम् । मिथ्या हि तत्र अन्य 'त्रिद्विरवद्यति' इति सख्याविधिना एकादशत्वमेवाहुः । यदि पर हृदयादिवाक्यानामेव 'इमामगृभ्णन्' इतिवत् परिसंख्यार्थत्वम् तत्रापि पशुमात्रविस्मरणेऽपि पशुप्रत्यभिज्ञानात् हृदयादिवाक्याभावे पशोरेव मध्यात् पूर्वार्धाच्च सकृदवदानं प्राप्नुवन् नान्यतेभ्यः इति निरस्तम् । यत्तु तत्र मिश्रैः पशोर्विशसनेन साधनत्वायोगात् सर्वावयवेभ्योऽवदानप्रसक्तिरुक्ता, सा आपाततः एव इत्युक्ता तत्रैव (अस्माभिः) । तदुक्तं आकृत्यधिकरणवार्तिके (पृ. ३०५।५) 'पश्वादिषु अपनीताङ्गेषु विशेषवुद्ध्यभावात् सामान्यरूपेण निराकाङ्क्षा बुद्धिर्दृष्टा ' इति । वाल पृ. २८–२५, * पशुसोमाधिकरणे वत्सस्यैव विनियुक्तदोहाद्गोदव्योपकारकतया 'वत्समालभेत' इत्यत्र आलम्भसंस्कार्यत्वमिति भवदेवः । पृ. ८२. * न च पशुसोमाधिकरणे पशुसोमयोः प्रणाड्या यागकारकत्व कथमुक्तमिति वाच्यम् । तत्र प्रकृतिविकृत्योः अवदानातिरिक्ततया हृदयादिगणसोमरसात्मना साक्षादेव पशुसोमयोः यागकारकत्वसंभवेऽपि आराद्युपकारकत्वस्य स्तोत्रस्य यागे कारकत्वासंभवात् । कु. २।१।१२।२७, * पृष्ठस्तोत्रमेकमनेक इति पक्षद्वय सद्भावात् एकमिति पक्षमाश्रित्य अङ्गानुरोधात् प्रधानावृत्तिपराहता, बहुयागसमुच्चये एवेदमुदाहरणम्, न तु एकस्य यागस्याङ्गानुरोधादभ्यासे, इति शङ्का पशुसोमाधिकरणे सोमोदाहरणविषयसिद्धान्त दर्शयन् परिहरति । परिमल. ३।२।२।७ ब्रसू. * प्रमाणान्तरेण अर्थादिना संभवत्प्राप्तिकाना तत्तद्ग्रहाणा तत्तद्देवतासंयोगाना च तत्तद्विधिभिः पुनर्विधानस्य आराद्युपकारकविषया कल्पनैंफलकता पशुसोमाधिकरणे कौस्तुभे व्यवस्थापितम् । भाट्ट. १०।४।१७. * 'सोमेन यजेत' सोमपदानुवादशङ्का तु सकृद्विनियोगविधिकल्पनाव्यावृत्तिफलकतयाऽपि विधिपरत्वे अनुवादत्वे वैयर्थ्यापत्तेः, पशुसोमाधिकरणे एव निरस्ता । कौ. ३।२।१७।३८. * 'हृदयस्याग्रेऽवद्यति' इत्यादीनि हृदयादिवाक्यानि दैवामवदानावदानसंस्कारविधिपराणि हविष्ट्वबोधकानि सन्ति इतरेषा हविष्ट्वपरिसंख्यार्थानि इत्युक्तं पशुसोमाधिकरणे कौस्तुभे । भाट्ट. १०।७।२.

* ऐन्द्रवायवादिविधयो यागानामचोदकाः, यतो ग्रहणलक्षणसंस्कार एवात्र चोद्यते इति पशुसोमाधिकरणगुणसूत्रार्थः (२।२।६।१८) । सोम. १०।६।११.

**पशुसोमाधिकरणन्यायः** । (पशुसोमाधिकरणोक्ता युक्ति) । साहस्री. ८६६.

* पशुसोमाधिकरणव्युत्पादितः यजिराख्यकर्म-निधि. । मु पृ. ९३१.

* प्रधानाभ्यासवत् ग्रहाभ्यासेऽपि अनुष्ठानभेदचोदनया धर्मग्रहणवशात्पर्यभेदात् पशुसोमाधिकरणपूर्वपक्षवत् सिद्धान्तेऽपि सोमविकारेषु एकस्यैव ग्रहणस्य धर्मे. सकृदनुष्ठानेन च भविष्य इति प्रकृतिवन्यायानुष्ठान पशुसोमाधिकरणसिद्धान्तप्रयोजनं न सेत्स्यति । मु. पृ. ७१८.

* पश्चादाम्नातं पूर्वाम्नातेन बाध्यते यथा अध्वरकल्पाया आग्नावैष्णवद्वादशकपालस्य ऐन्द्राग्नविकारत्वात् आमावास्यतन्त्रेण सारस्वत्या आग्नेयमसामाया आम्नातं पौर्णमासतन्त्रम् । बाल. पृ. १४१.

* 'पश्य मृगो धावति' इत्यादौ पश्य इत्यस्य कर्मान्वयं विना शाब्दबोधाजनकत्वात् युक्तो धावनभावनाया. कर्मत्वेन तस्यान्वय. । रहस्य. पृ ७४.

* पाकः अन्वाहार्यस्थानापन्नेऽपि चरौ नानुष्ठेय आग्रयणे । १०।३।८।१६, * पाकः अन्वाहार्यस्थानापन्ने चातसि नानुष्ठेय आग्रयणे । १०।३।९।२७. * पाकः कृष्णलेषु औप्यरूप कार्यः । १०।२।२. मीको. पृ. १४७५ 'कृष्णलेषु मुख्यपाकासंभवात्' इत्यत्र द्रष्टव्यम् । * पाकः कृष्णलचरौ 'घृते श्रपयति' इति प्रत्यक्षशिष्टत्वात् अदृष्टार्थः कर्तव्यः । १०।२।१।१-२ * पाकः नाम 'भेय तण्डुलानां विक्लित्तिः' इति महाभाष्ये विक्लेदनस्य पाकत्वोक्तिः । विक्लित्तिफलस्य अधिश्रयणादिव्यापारसमूहस्य पचिवाच्यत्वम् , नापि श्रयणादिमात्रस्य प्रत्येकस्य इत्येवमर्थकेन 'विक्लित्तिः पाकफलम्' इति प्रयोजनवाच्यत्वशब्दाभ्युपगमेन भाष्य व्याख्येयम् । मु. पृ. १४२४. * पाक. शौर्यचरोः श्रयणकामेन । १०।१।११. 'शौर्यचरो पाक.' इत्यत्र द्रष्टव्यम् । * पाको हविर्भूतस्य मांसस्य नियतः । वि. १०।७।२

X पाकस्य चात्रसारित्वात् । १०।३।९। ३७॥

आग्रयणे 'पाको दक्षिणा' श्रुता । तत्र चामसि पाको न कर्तव्यः । पाकस्य हि अन्वाहार्ये व्यवहारित त्वात् । अन्वाहार्यो हि ओदनः अन्नम् । तेन पाकः चारित । नहि पाक विना अन्न भवति । चातस्तु नान्नम् । तस्मात्तत्र पाको न कार्यः । इति सिद्धान्तः । के.

* पाकस्य पुरुषार्थस्य दीक्षितकर्तृकत्वस्य युद्दाम. ज्योतिष्टोमे । नद्धिकारविचारणम् । १०।८।७।१२-१५.

* पाकादिक्रियाकर्मणः तण्डुलादे. क्रियाजन्यातिशयाश्रयत्वदर्शनात् कर्मत्वेन ज्ञानक्रियाकर्मणोऽपि क्रियाजन्यातिशयाश्रयत्वमनुमीयते । मु पृ. ६६१.

* पाकभेदात् नानाजातीयेषु पशुषु कुम्भ्यादीनां भेद. । ११।४।१०।४०-४१. मीको. पृ. १९३६ 'तत्र न०' इत्यत्र द्रष्टव्यम् ।

* पाकयज्ञः पाक निर्वर्त्य क्रियमाणो यज्ञ. । सकर्ष. २।४।१०.

X पाकयज्ञेषु 'द्विर्जुहोति, द्विर्निमार्ष्टि, द्विः प्राश्नाति, उत्सृज्याचामति, निर्लेढि' इति धर्मा भवन्ति ॥

पाकयज्ञप्रकरणकभावनायाः कथम्भावाकाङ्क्षायामाक्षेपलभ्यैः सन्निपातिभिरेव अङ्गानामिव आकाङ्क्षानिवृत्तिः । इति प्राप्ते, 'द्विर्जुहोति, द्विर्निमार्ष्टि, द्विः प्राश्नाति, उत्सृज्याचामति, निर्लेढि' इति प्रकरणिनः शेषित्वेन विहिता अपि धर्मा. पाकयज्ञेऽपि स्युः । 'पशोरालभेत वायव्यस्यैव शिर उपदध्यात्' इत्येकस्या एव श्रुतेः पशुशीर्षादिविनियोगपदार्थपशोरुपधानोभयपरत्वदर्शनात् । सकर्ष. २।४।१२.

X पाकयज्ञशब्दः दर्विहोममात्रवाचकः ॥

पाकः निर्वर्त्यः क्रियमाणो यज्ञ इति व्युत्पत्त्या होमयागान्यविशिष्टवाचकोऽयं शब्दः । इति प्राप्ते, 'यद्वै चातुर्मास्यानां पाकयज्ञ तेन तदेषां पश्चात् गृहमेधीयो येनो पाकयज्ञो न इध्मा बर्हिर्भवति न सामिधेनीरन्वाह न प्रयाजा इज्यन्ते' इत्यादिना वैदिकानां श्रमाभावबोधनेन दर्विहोममात्रवाचकः । सकर्ष. २।४।१०.

X पाकयज्ञशब्दः नाहुतिपर्यायः ॥

पाकयज्ञशब्दस्य आहुत्यादिशब्दवत् स्मार्तश्रौतसाधारण्येन यागमात्रवाचकत्वे प्राप्ते, 'मनुर्वै पाकयज्ञ आसीत् स इडामिमां यज्ञमपश्यत्' इत्यादिना पाकयज्ञेन प्रतिपत्त्याहुतिप्रभेदस्य श्रुतिप्रदर्शनात् न आहुतिपर्यायता । सकर्ष २।४।९.

X पाकयज्ञशब्दः लौकिकहोमानामेव वाचकः ॥

दर्विहोमत्वाविशेषात् लौकिकवैदिकसाधारणो दर्विहोमानां वाचकः । इति प्राप्ते, लौकिकानामेव दर्वि-

होमानामेव वाचकः । 'त्रिवीना पाकयज्ञः, तत्र्यीनवाणा पाकयज्ञः' इत्यादेः स्मार्ते एव व्यवहारस्य दर्शनात् । 'यदाऽन्यस्य हविषः सुच्यवत्यति, सर्वमेतदर्थे जुहोति' इति विधाय 'अथ कस्मात् द्विर्जुहोति' इत्यादिना 'तदस्य पाकयज्ञस्येव' इत्यनेन द्विर्होमादिनिर्लेहनान्तपदार्थाः पाकयज्ञीयाः अत्र क्रियन्ते इत्याक्षेपेण वैदिकानामेषां न पाकयज्ञता इति ध्वनयाञ्च । संकर्ष. २।४।११.

* पाकहोमयोः ( अनाग्रयणाग्निहोत्रहोमयोः ) अर्थतः क्रमः । ५।१।१२।२.

* पाकहोमवतानां दीक्षाकालोत्कर्षः । ६।५।१०। ३८–३९. मीको. पृ. २१०८ 'दीक्षोत्कर्षे०' इत्यत्र द्रष्टव्यम् ।

* पाचकादिशब्दाः न शक्तिपराः, किं तर्हि ? शक्त्यन्तरायोगित्वात् शक्तिमत्पराः । भा. ३।४।८।१३ पृ. ९३४.

* पाञ्चदश्यं सामिधेनीनां ब्राह्मणराजन्यविषयं दर्शपूर्णमासयोः । साप्तदश्यं तु विकृतिषु वर्णत्रयसाधारणम्, वैश्यस्य च दर्शपूर्णमासयोरपि । ६।६।७।२६–३९. मीको. पृ. ९८३ 'अधिकारः अध्वरकल्पादिषु०' इत्यत्र द्रष्टव्यम् । * पाञ्चदश्यस्य नित्यस्य, वैश्यनिमित्तकस्य च साप्तदश्यस्य प्रतिप्रसवार्थेन पाठ्येन ( सामिधेनीनाम् ) एकविंशतित्वेन बाधः । बाल. पृ. १३२.

* पाञ्चरात्रपाशुपतागमानां वैदिकविरुद्धागमप्रचुरत्वात् सर्वथैवाप्रामाण्यम् । कु. १।३।३।४.

* पाञ्चसांवत्सरिकावृत्तावपि चातुर्मास्येषु वैश्वानरपार्जन्यचातुर्होतृहोमानां सकृदेवानुष्ठानम् । संकर्ष. ३।१।२१. मीको. पृ. १६९२ 'चातुर्मास्येषु पाञ्चसांवत्सरिकावृत्तौ०' इत्यत्र द्रष्टव्यम् ।

* पाञ्चसांवत्सरिकपक्षोऽपि चातुर्मास्येषु । संकर्ष. ३।१।१९. मीको. पृ. १६९१ 'चातुर्मास्येषु पाञ्चसांवत्सरिकपक्षे०' इत्यत्र द्रष्टव्यम् ।

⌛ पाटच्चरलुण्ठिते वेश्मनि यामिकजागरणं इति न्यायः । पाटच्चरश्चोरः । यामिकः प्रहरकः । प्रयोजनाऽनुपयुक्तवैलक्षण्यप्रयत्नतावीति लण्डने स्पष्टः । साहस्री. ६७२.

* पाठनमन्तरेण विपत्रशनां नोपशान्तिः । वि. ३।८।४.

* योऽपि हि स्रुघ्नान्मथुरां गत्वा मथुरायाः पाटलिपुत्रं व्रजति, सोऽपि स्रुघ्नात् पाटलिपुत्रं याति इति शक्यते वदितुम् । इति भाष्योक्तपाटलिपुत्रगमनन्यायेन 'तेजः परस्यां देवतायाम्' इति निर्देशः प्रणाडीविद्धतया-मानेऽपि उपपन्नतमः । आभरणम्. ४।२।१।५ ब्रसू.

* पाठः क्रमं कल्पयन् वस्तुसामर्थ्यं अनुसृत्यैव कल्पयति । वि. ५।४।१. * पाठः क्रमबोधकं प्रमाणम् । मणि. पृ. १३, बाल. पृ. ८. * पाठः न क्रमस्याभिधायकः, किन्तु अन्यथाऽनुपपत्त्या क्रमं कल्पयति । चि. ५।४।१. * पाठः मिश्रप्रयोगविधिपरिग्रहस्थले पारायणादौ उपयुज्यते । भाट्ट. ५।३।१२. * पाठं बाधित्वा श्रुत्यर्थौ क्रमं नियच्छतः । वि. ५।८।१. * पाठस्य स्मारकक्रमविधयेन क्रमनियामकत्वम् । भाट्ट. ५।१।९.

⌛ पाठयोर्मन्त्रब्राह्मणगतयोर्मन्त्रपाठो बलीयान् ( भाट्ट. ) ॥

मन्त्रतस्तु विरोधे स्यात् प्रयोगरूपसामर्थ्यात् तस्मादुत्पत्तिदेशः सः । ५।१।९।१६॥

भाष्यम्— दर्शपूर्णमासयोराग्नेयस्य पूर्वं मन्त्रपाठः, उत्तरो ब्राह्मणस्य । तत्र संदेहः, कतमः पाठो बलीयानिति ? उच्यते । अनियमः ? नियमकारिणः शास्त्रस्याभावादिति । एवं प्राप्ते, ब्रूमः । मन्त्रपाठो बलीयान् । कुतः ? प्रयोगरूपसामर्थ्यात् । प्रयोगाय मन्त्रस्य रूपसामर्थ्यम् । तदस्य सामर्थ्यम्, येन मन्त्रः प्रयुज्यते । तस्य च प्रयुज्यमानस्य क्रमो दृष्टाय भवति । ननु च ब्राह्मणपाठस्यापि तदेव प्रयोजनम् । उच्यते । उत्पत्तिदेशः सः । अपरमपि तस्य प्रयोजनं कर्मोत्पत्त्यर्थं भविष्यति ।

टुप्— मन्त्रतस्तु विरोधे स्यात् ॥ आग्नेयस्य पूर्वो मन्त्रपाठः ( उत्तरो ब्राह्मणपाठ. ), अग्नीषोमीयस्य तु पूर्वो ब्राह्मणपाठः ( मन्त्रपाठस्तूत्तरः ) । तत्र ब्राह्मणपाठात् किमग्नीषोमीयस्य पूर्वं धर्माः, उत मन्त्रपाठात् आग्नेयस्येति ( इति मन्त्रब्राह्मणपाठयोर्बलाबलं चिन्त्यते ) ।

किं प्राप्तम् ? पूर्वो मन्त्रः उत्तरं (मन्त्र पाठेन प्रत्यक्षेण) उपस्थापयति । (यथा) 'समिधो यजति' इति समाप्यमानं तनूनपातमुपस्थापयति । यतो द्वयोरपि समाम्नायपाठयोः प्रत्यक्षत्वात् अनियम । इति प्राप्ते, (ब्रूमः) । मन्त्रपाठो बलीयान् । कुतः ? (ब्राह्मणपाठस्य विप्रकृष्टत्वात् । तथाहि,) 'समिधो यजति' इत्यनेन पदार्थो विहितः । स अनुष्ठानवेलाया येन वाक्येन विहितः, तत् वाक्यं स्मारयति । तेन वाक्येन स्मृतेन अनुष्ठानवेलाया स पदार्थः स्मारितः सन् अनुष्ठीयते, (अनुष्ठानकाले प्रतिवेदं) द्वितीयं पदार्थं न स्मारयति (अर्थात् प्रस्थानभेदरूपेण पौर्वापर्यस्य अनवक्लृप्तत्वात्) । किं तर्हि ? अनुष्ठानोत्तरकाल योऽसौ कृतः पदार्थः, तमालोचयति । स चालोच्यमानः येन (समिधो यजतीत्यनेन) ब्राह्मणखण्डकेन विहितः, तत् स्मारयति । तच्च (स्मृतम्) स्वानुत्तरं ब्राह्मणखण्डकम् (तनूनपातं यजति इत्येतत् ब्राह्मणखण्डकम्) स्मारयति पाठात् । तत् ब्राह्मणं पुनः पदार्थं विदधाति (पुनःशब्दः तु-शब्दार्थकः) । अनुष्ठानवेलाया तत् (ब्राह्मणम्) स्मरणमपेक्षितं यम् । अथ (मन्त्रपाठात् ब्राह्मणपाठे) विप्रकर्षः । मन्त्रः पुनः (अन्त्य मन्त्र प्रयुज्यमानः) परिसमाप्यमानः उत्तरं मन्त्रं पर्युपस्थापयति । स च (उत्तरो मन्त्रः) पर्युपस्थाप्यमानः उत्तरं पदार्थं पर्युपस्थापयन् पर्युपतिष्ठते । तस्मात् तत्र (आलोचना-) अपेक्षाऽभावात् नास्ति विप्रकर्षः । 'उत्पत्तिदेशः स.' इति (सूत्रस्य अयमर्थः—) पूर्वः पदार्थो विहितः, उत्तरः पदार्थो विहितः इति निर्धारितानां य' क्रम', तेन अर्थवान् ब्राह्मणपाठक्रमः, नानुष्ठानक्रमेणेति । (तस्मात् मन्त्रक्रमो बलीयान्) ।

शा— 'विधिक्रमबलीयस्त्वमुत्पत्त्यवधारणात् । उत्पन्नेषु नियुक्तेषु मन्त्रे मन्त्रक्रमो भवेत् ॥, नैवं स्मृतिक्रमेणैव ह्यनुष्ठानक्रमो भवेत् । स्मारकक्रमतश्चापि स्मृतीनां क्रम इष्यते ॥ मन्त्राम्नानस्य चार्थत्वात् स्मृत्यर्थो विषयः पुनः । विधिनैव कृतार्थत्वात्तस्मादयं स्मारका मता ॥' तस्मात् मन्त्रक्रमेणानुष्ठानम्, तदभावे तु विधिरपि स्मारकः इति तत्र तत्क्रमस्य प्रामाण्यम् ।

सोम— प्रथमावगतत्वात् यथा पूर्वत्र पाठक्रमस्य ग्रबलत्वमेव इहापीति प्रत्यवस्थानात् संगतिः । सूत्रार्थस्तु—मन्त्रब्राह्मणक्रमविरोधे मन्त्रपाठक्रमात् पदार्थक्रमः स्यात् प्रयोगसामर्थ्यात् मन्त्रस्य प्रयोगपदार्थस्मारकसामर्थ्यात्, ब्राह्मणपाठस्तु उत्पत्तिदेशः इति न प्रयोगकाले स्मृत्युपयुक्तः इति ।

वि— 'अग्नीषोमीय आग्नेयात् पूर्वो नो वा, ऽद्य पूर्वता । ब्राह्मणक्रमतो, नैव मन्त्रक्रमबलित्वत ॥ स्मृतिक्रमादनुष्ठान मन्त्राणां स्मारकत्वतः । प्राबल्य ब्राह्मणस्यास्ति विधिनाऽपि कृतार्थता ॥'

भाट्ट— पाठयोस्तु मन्त्रब्राह्मणगतयोर्मन्त्रपाठो बलीयान्, न तु ब्राह्मणपाठः, तस्योत्पत्तिविनियोगविधिगतत्वेन प्रयोगोपस्थितत्वेऽपि पाठस्य स्मारकक्रमविषयैव क्रमनियामकत्वोक्तेः, मन्त्रत्वे च तस्यैव स्मारकत्वविधानोपयुक्तस्मरणस्य च विधेः स्मारकत्वाभावात् मन्त्रपाठक्रम एव बलीयान् । तेन याज्याऽनुवाक्यादि मन्त्रपाठक्रमात् आग्नेयस्य प्रथमानुष्ठानम्, पश्चात् उपांशुयाजोत्तरमग्नीषोमीयस्य । न तु ब्राह्मणपाठक्रमात् अग्नीषोमीयस्य प्रथमम्, पश्चादुपांशुयाजोत्तरमाग्नेयस्य । अत एव तत्र पाठक्रम स्वाध्यायादावुपयुज्यते ।

मण्डन— 'मन्त्रक्रमो बली तत्र ।' मन्त्रब्राह्मणपाठविरोधे । ११.

शंकर— 'विधिपाठात्मन्त्रपाठः ।' बली । ११.

* पाठे आनुमानिको विधिः प्रत्यक्षेण विधिना बाध्यते । भा. ८।४।५।१६.

* पाठाधिकरणे ब्राह्मणस्य स्मारकत्व विधायकत्व चेत्युभयार्थत्व वदयते । मु. पृ ६६६.

* पाठादीनां क्रमापेक्षया नियामकता तत्रैव, यत्र एकप्रयोगविधिपरिग्रहः अनेकेषाम् । भाट्ट. ५।१।१२.

* पाठोपस्थितस्य क्रमस्य विनियोजकत्व कल्पनया अङ्गत्वे भासमाने प्रयोगविधिना प्रयोगनियमनम् । भाट्ट. ५।१।१४.

* पाठक्रमोऽपि पदार्थबोधकवाक्यानां पदार्थक्रमनियामकः । पदार्थबोधकत्वं च क्वचित् अनुष्ठेयपदार्थबोधकत्वम्, क्वचिच्च तत्संबन्धिद्रव्यदेवतादिबोधकत्वम् । तेन च द्विविधेनापि अनुष्ठेयपदार्थक्रमनियमः । भाट्ट. ५।१।४, * पाठक्रमः अर्थक्रमेण बाध्यते 'अग्निहोत्रं जुहोति, यवागूं पचति' इत्यादौ । ५।४।१. * पाठक्रमः आतिदेशिकः औपदेशिकमुख्यक्रमात् बलवान् । ५।१। १०।१७–१८. * पाठक्रमः उपदेशविषयः एव । टुप्. ५।१।१।१ पृ. १२८७. * पाठक्रमः प्रत्याम्नाने न नियामकः, किन्तु यथाक्रममनुष्ठानम् । ५।३।१२।३२–३६. * पाठक्रमः बोधकाभिसंस्य बलीयान्, मुख्यप्रवृत्तिक्रमौ तु प्रयोगवचनाभिकरवात् दुर्बलौ । टुप्. ५।१।१०।१८, * पाठक्रमः प्रत्यक्षः, मुख्यक्रमस्तु आनुमानिकः, तेन पाठक्रमो मुख्यक्रमात् बलवान् । तेन दर्शपूर्णमासयोः आज्यनिर्वापः पूर्वं न कार्यः, अग्नीषोमीयनिर्वाप एव आम्नायात् पूर्वं कार्यः । ५।१।८।१५.

ऊँ पाठक्रमः मुख्यक्रमापेक्षया बलीयान् ॥

प्रकृतौ तु स्वशब्दत्वाद् यथाक्रमं प्रतीयेत । ५।१।८।१५ ॥

भाष्यम्— दर्शपूर्णमासयोः पूर्वमौपधर्माः समाम्नाताः, तत आज्यस्य । तत्र संदेहः किमग्नीषोमीय धर्माणां मुख्यक्रमेण पूर्वमाज्यस्य धर्माः कर्तव्याः, उत यथापाठमिति । मुख्यक्रमानुरोधेन आज्यस्य पूर्वम् । इति प्राप्ते, ब्रूमः । प्रकृतौ यथापाठं प्रतीयेत । स्वशब्दो हि तेषां पाठक्रमः । सोऽन्यथा क्रियमाणे बाधितः स्यात् । सहत्वस्य पुनरुपसंग्राहकः प्रयोगवचनः स्वक्रमेण पदार्थे सन्निकृष्यमाणे न बाधितो भविष्यति । अपिच पाठक्रमे स्वशब्दः 'साध्याओऽग्नेकयः' इति । मुख्यक्रमे प्रयोगवचनैकवाक्यता सूक्ष्मा ।

टुप्— ( इह तावत् पूर्वाधिकरणापवादरूपेण सिद्धान्तामिधानं मुख्यपाठयोर्बलाबलं चिन्त्यते ) । आज्यनिर्वाप इहोदाहरणम् । पूर्वेण न्यायेन तथैव ( मुख्यक्रमेण अनुष्ठाने ) प्राप्ते अपवाद आरभ्यते । पाठक्रमेणानुष्ठानं स्वाध्यायेन ( अन्यानपेक्षतया ) अवगतत्वात् प्रत्यक्षम् । ( मुख्य आनुमानिकः । कल्पना च विलम्बते इत्याह– ) सह पदार्थाः कर्तव्याः इति पदार्थेषु अयं धर्मः सहत्वं नाम ( अपेक्षितः ) । तत्र प्रयोगवचनेन सहत्वमवबोध्यते । सहत्व ( च ) अवबोधयत् अन्यथाऽनुपपत्त्या क्रममनुमापयति प्रधानागतं ( प्रधानासत्तिसिद्ध्यर्थम् ) । तत्र ( अङ्गेषु ) यत् अश्रुतक्रमानुमानम्, तत् प्रत्यक्षेण ( पाठ– )क्रमेण बाध्यते । तत्रो यथा– ( पाठ– ) क्रमं व्यवस्था । ( भाष्य व्याचष्टे– ) मुख्यक्रमे प्रयोगवचनेन एकवाक्यता सूक्ष्मा, अश्रुतः क्रमः कल्प्यते इत्यर्थः ।

शा— 'तत्र मुख्यक्रमादाज्यनिर्वापस्य पुरः क्रिया । पाठतस्त्वौपधस्यैव प्राथम्यमनपेक्षतः ॥'

सोम — पूर्वाधिकरणोक्तप्रधानप्रत्यासत्त्यनुग्रहात् मुख्यक्रमः युक्तः । अत एव संगतिः । सूत्रार्थस्तु– प्रकृतौ यथाक्रमं यथापाठक्रमं निर्वापक्रमः प्रतीयते, पाठक्रमस्य स्वशब्दत्वात् अङ्गाश्रमकशब्दधर्मतया प्रत्यक्षेण इतिकर्तव्यतामादिति ।

वि— 'उपांशुयाजे पूर्वमग्नीषोमीयकेऽथवा । धर्मानुष्ठान( ने ), आद्योऽस्तु मुख्ययोस्तादृक्क्रमात् ॥, मुक्तमौपधधर्माणां प्राथम्यं पूर्वपाठतः । पाठक्रमस्याविलम्बादाज्यधर्मास्तु पश्चिमाः ॥'

भाट्ट— तदेवं षट् प्रमाणानि निरूपितानि । तेषां चाद्याधिकरणोक्तक्रमेण पारदौर्बल्यं द्रष्टव्यम्, न तु सूत्रक्रमेण । तत्र श्रुतिविरोधे अर्थस्यैव अन्यथाकल्पनात् दौर्बल्यम् । अर्थविरोधे पाठस्य वक्ष्यते । एवं वैकृतपाठविरोधे प्राकृतस्थानस्यापि । प्राकृतक्रमस्थानविरोधे प्रधानप्रयोगनिष्पाद्यमुख्यक्रमस्य दौर्बल्यं वक्ष्यते एव । मुख्यक्रमविरोधे प्रवृत्तिक्रमस्य दौर्बल्यमपि तथैव ।

तदिह पाठक्रममुख्यक्रमयोः बलाबलं चिन्त्यते । दर्शपूर्णमासयोः आग्नेयोपांशुयाजाग्नीषोमीयरूपमुख्यक्रमात् आज्यस्योपांशुयाजीयस्य प्रथमं निर्वापः, पश्चादग्नीषोमीयद्रव्यस्य । पाठक्रमात्तु विपरीतः क्रमः । तत्र पाठस्य स्मारकवाक्यप्रवृत्तित्वेन प्रत्यक्षत्वात् शीघ्रोपस्थितेश्च बलवत्त्वम् । मुख्यक्रमस्तु मुख्ययोरेव प्रथमं केनापि प्रमाणेनावगम्य तदपेक्षया तत्सान्निध्यसम्पत्त्यै कल्प्यमानो विलम्बित इति दुर्बलः ।

मण्डन— 'मुख्यात् पाठक्रमो बली।' १०.

शंकर-- 'पाठो मुख्यक्रमाद् बली।' ११.

● नैमित्तिको हि पाठक्रमः इतर पाठक्रमं बाधित्वा निविशते। टुप्. ४।३।१६।३९, ● पूर्वः पदार्थः समाप्यमानः उत्तरं बुद्धौ अभिनियस्यति इत्यय पाठक्रमः बाध्यते। ५।१।६।१३, ● यत्र आनुपूर्व्येण पदार्था विधीयन्ते स पाठक्रमः। यथा 'हृदयस्याग्रेऽवद्यत्यथ जिह्वाया अथ वक्षसः' इति। ५।१।१।१ पृ.१२८९. ● पाठक्रमेण एव ऋचः आगमयितव्याः आगमेन सङ्ख्यापूरणे, एकविंशे त्रिणवे त्रयस्त्रिंशे चातिराने। भा ५।१।६।१३. ● पाठक्रमेण स्थानक्रमो बाध्यते। यथा— साविनहोम—उखासंभरणाद्यपूर्वपदार्थान् विधाय दीक्षणीयाऽऽदयः प्राकृताः सगुणाः श्रुताः। तत्र प्राकृतेन दीक्षणीयाप्राचीनेन पदार्थेन उपस्थितानां दीक्षणीयादीनां स्थानेन प्रागनुष्ठाने तत्. प्राक् पाठः साविनहोमादेः न स्यात् इति (पाठक्रमेण स्थानक्रमो बाध्यते)। इदं 'प्राकृताच्च पुरस्तात्' (५।२।११) इत्यधिकरणे उक्तम्। बाल. पृ १३७.

ﾠ पाठक्रमादर्थक्रमो बलीयान् इति न्यायः। यथा—'अनड्वाहमुदहारि या त्वं हरसि शिरसा कुम्भं भगिनि साचीनमभिधावन्तमद्राक्षी.' इति। तस्य यथेष्टमभिसम्बन्धो भवति, उदहारि भगिनि या त्वं कुम्भं हरसि शिरसा, अनड्वाहं साचीनमभिधावन्तमद्राक्षीरिति। अत एव 'आनुपूर्व्येण सन्निविष्टानां यथेष्टमभिसम्बन्ध' इति न्यायोऽप्यनुसरणीयेति। 'न पदान्त॰' (पा १।१।५८) इति सूत्रमहाभाष्यकैयटयोः स्पष्टं। माहली ५९९. ● 'पाठक्रमादर्थ॰' इति न्यायेन 'भुमभृता त्वा सं भरामि' 'अदित्यै रास्नाऽसि' इति मन्त्रद्वयस्य व्युत्क्रमेण विनियोगः कृतो दर्शित। तैसंसा. १।१।२।२. ● 'असिद्धं बहिरङ्गमन्तरङ्गे' इति परिभाषाया बहिरङ्गस्य प्रथमोपस्थितावपि 'पाठक्रमादर्थक्रमो बलीयान्' इति न्यायेन प्रथममन्तरङ्गपदार्थं विविनक्ति। भूति पृ. १६८.

● पाठक्रमात् यथासङ्ख्यरूपात् दधिमन्त्रो मध्यवर्ती मध्यवर्तिनः उपांशुयाजस्याङ्गम्। ३।३।५, मीको. पृ १५०९ 'क्रमाधिकरणम्' इत्यत्र द्रष्टव्यम्। ● पाठक्रमस्य श्रुत्यर्थक्रमाभ्यां बाधः। क्रमशेषाधिकरणम्। ५।४।१।१.

ﾠ पाठक्रमाधिकरणम्। पाठक्रमन्यायः। प्रयाजेषु पाठक्रमो नियामकः॥

**क्रमेण वा नियम्येत क्रत्वेकत्वे, तद्गुणत्वात्। ५।१।४।४॥**

**भाष्यम्**— दर्शपूर्णमासयोराम्नातम् 'समिधो यजति, तनूनपातं यजति, इडो यजति, बर्हिर्यजति, स्वाहाकारं यजति' इति। तत्र संशयः किमनियतेनैव क्रमेण एषामनुष्ठानम्, उत य· पाठक्रम, स एव नियम्येत इति। किं प्राप्तम्? नियमकारिणः शास्त्रस्याभावात् अनियम इति। एवं प्राप्ते, ब्रूमः। क्रमेणैव नियम्येन एकस्मिन् क्रताविति। कुतः? तद्गुणत्वात्। तद्गुणता हि गम्यते पदार्थानाम्। यथा 'स्नायात् अनुलिम्पेत् भुञ्जीत' इति च क्रमेणानुष्ठानमवगम्यते वाक्यात् पदार्थानाम्। यथा च अदृष्टार्थेषूपदिश्यमानेषु कश्चित् ब्रूयात् 'देवाय धूपो देय·, पुष्पाण्यवकिरत्यानि, चन्दनेनानुलेपय·, उपहारोऽस्मै उपहर्तव्य, एवं ह्यते देवस्तुष्यति' इति। तमन्य प्रतिब्रूते—'नैतदेवम्, न प्रथमं धूपो दातव्य·, प्रथमं पुष्पाण्यवकिरितव्यानि' इति। एवं मन्यते धूपदानस्य प्राथम्यमनेनोक्तमिति। तस्मात् वाचनिक एवायं क्रम इति।

**अशाब्द इति चेत् स्याद्वाक्यशब्दत्वात्।५॥**

**भाष्यम्**— इति चेत्पश्यसि, अर्थेन गम्यमाने अशाब्द एव क्रम। कथम्? पदार्थपूर्वको वाक्यार्थः। पदेभ्यश्च पदार्था एवावगम्यन्ते न क्रम। स्यादेतदेवम्, यदि पदानां समूहस्य भवेत् प्रत्यायकमर्थस्य स्यात्। न तु समुदायः प्रत्यायक इत्युक्तम्, 'तद्भूतानां क्रियार्थेन समाम्नाय' इत्यत्र। तस्मात् क्रमस्य वाचकशब्दाभावात् व्यामोह एव क्रमोऽवगम्यते। एवं पूर्वासक्तिरनुग्रहीष्यते। इतरथा सतोऽपि विप्रकृष्येत घटीयन्त्र इव। दर्शयिष्यति च 'हृदयस्याग्रेऽवद्यति, अथ जिह्वायाः, अथ वक्षसः' इति। यदि नियामकः पाठक्रमस्ततो न विवातयमेतत्। नियामके हि पाठक्रमे पाठक्रमादेव प्राप्नुयात्।

अर्थकृते वाऽनुमानं स्यात् क्रत्वेकत्वे परार्थत्वात्, स्वेन त्वर्थेन संबन्धस्तस्मात् स्वशब्द मुच्येत ॥ ६ ॥

भाष्यम्— एकस्मिन् क्रतौ एकत्वात् कर्तुः अनेकस्मिन् पदार्थे अर्थकृतत्वात् क्रमस्य । तत्रैव एव क्रमो नियम्येतानुमानेन । कुतः ? परार्थत्वाद्वेदस्य । परार्थो हि वेदो यदनेन शक्यते कर्तुं तस्मैतस्मै प्रयोजनायैव समाम्नायते । शक्यते चानेन पदार्थो विधातुम्, शक्यते च क्रियाकाले प्रतिपत्तुम् । तस्माद्वेदः पदार्थांश्च विधातुमुपादेय, क्रियाकाले च प्रतिपत्तुम् । न गम्यते विशेषः विधातुमेव समाम्नायते न प्रतिपत्तुमिति । अगम्यमाने विशेषे उभयार्थमुपादीयते इति गम्यते । प्रतिपत्तु चानेन क्रमेण शक्यते नान्येन । अत एव च श्रुत्या पाठक्रमापचारे विनष्ट इत्युच्यते । इतरथा हि यस्य प्रयोजनं तस्मिन्निर्वर्तमाने एव किं नष्टं स्यात् । अदृष्टं कल्प्येत, तच्चान्याय्यं दृष्टे सति । तस्मात् स्वशब्दः क्रमः । य एव पदार्थानां वाचकः शब्दः स एव क्रमस्यापि ।

टुप्— 'स्वाध्यायोऽध्येतव्यः' इति (वाक्यस्य तावदयमर्थः) स्वाध्यायाध्ययनेन भावयेत्, (तत्र) किमिति (भाव्यविशेषापेक्षायाम्) तत्र विश्वजिद्वत् फलं न कल्प्यते, न च सन्निधिन्यायेन अर्थवादतः फलम् (कल्प्यम्) । भवितव्यं तु फलेन । तस्मात् स्वाध्यायाध्ययनेन यदवबोध्यते, तदत्र फलम् (कर्मावबोधनमेव इह फलमित्यर्थः) । पदार्थाश्च अनन्तरुद्धा अनेन बोध्यन्ते (तेषाम्) क्रमश्च । तस्मात् यथा पदार्थस्वरूपमनन्तरुद्धमनुष्ठ्यते, एवं क्रमोऽपि अनन्तरुद्ध एव । अतः स्वाध्यायेन पदार्थज्ञानं भावयेत् क्रमज्ञानं चेत्यर्थः । तस्मात् स्वशब्दः (क्रमः प्रतीयते) ।

तथा चान्यार्थदर्शनम् ॥ ७ ॥

भाष्यम्— एवं चान्यार्थं दर्शयति, 'व्यत्यस्तमृतया उपदधाति । व्यत्यस्तं षोडशिनं शंसति' 'आश्विनो दशमो गृह्यते । तं तृतीयं जुहोति' इति । यदि अनियमेनोपधानं शंसनं च, व्यत्यस्तवचनमनर्थकं स्यात् । नहि कथञ्चिदव्यत्यास इति । तथा आश्विनस्य तृतीयस्य होमानुवादो नावकल्प्येत, यदि पाठक्रमेणानियम इति । तथा 'अभिचरता प्रतिलोमं होतव्यम् । प्राणानेवास्य प्रतीचः प्रतियौति' इति क्वचित् प्रतिलोमं निषेधदनुलोमं दर्शयति । तदुपपद्यते यदि पाठक्रमेण प्रयोगः । इतरथा सर्वमनुलोमं स्यात्, प्रतिलोमदर्शनं नोपपद्येत । तथा चतुर्थोत्तमयोः प्रतिगमानयतीत्युक्ते सति 'अतिहायेडो बर्हिः प्रति समानयति' इत्युच्यते । तेन बर्हिषश्चतुर्थतां दर्शयति । सा पाठक्रमे नियामके अवकल्पते ।

शा— अनियमः इति प्राप्ते, ब्रूमः । 'यथापाठमनुष्ठानं तथैव प्रतिपत्तितः । स्मृतिः प्रयोगवेलायां वाक्यैरेव च कर्मणाम् ॥'

सोम— पूर्ववत् अनियमः इति प्रत्यवस्थानात्, श्रुत्यर्थाभ्यां जघन्यप्रमाणत्वात् संगतिः । सूत्रार्थस्तु— एककर्तृकत्वे पाठक्रमेणैवानुष्ठानं नियम्येत 'गन्धो देयः, पुष्पाणि देयानि' इत्यादौ पाठक्रमस्य पदार्थक्रमबोधकत्वा गुणत्वकथनात् इति ।

वि— 'प्रयाजेषु क्रमो नास्ति विद्यते वा, न विद्यते । श्रुत्यर्थाभावतो, मैवं क्रमः पाठाद्वियम्यताम् ॥'

भाट्ट— पदार्थबोधकवाक्यपाठक्रमोऽपि पदार्थक्रमनियामकः । न च विधीनां तत्तत्पदार्थविधायकत्वात् क्रमस्य च स्वाध्यायत्वसिद्धयर्थत्वेन अध्ययनविध्युपयुक्तत्वात् पदार्थक्रमनियामकत्वम्, पदार्थानामनुष्ठानकाले स्मारकापेक्षाया मन्त्रादीनामुपस्थितत्वेन स्मारकत्वनियमात् तत्क्रमेणैव अनुष्ठानक्रमनियमोपपत्तेः । अत एव यत्र मन्त्राम्नानम्, तत्र तत्क्रम एव नियामकः । यत्र तु न तत्, तत्र विधायकत्वेनोपयुक्तस्यापि विधिवाक्यस्यैव उपस्थितस्य स्मारकत्वेन नियमात् तत्क्रमस्यापि पदार्थक्रमनियामकत्वम् । पाठोपस्थितस्य च क्रमस्य विनियोजकवाक्यकल्पनया अङ्गत्वेऽवगते प्रयोगविधिना प्रयोग विधानम् । लक्षणे पदार्थबोधकस्य च क्वचिदनुष्ठेयपदार्थबोधकत्वम्, क्वचित्तु तत्सम्बन्धिद्रव्यदेवतादिबोधकत्वम् । तेन च द्विविधेनापि अनुष्ठेयपदार्थक्रमनियमः । अत एव देवताबोधकयाज्याऽऽदिक्रमादपि यागक्रमः । अतः पाठोऽपि क्रमनियामकः अपेक्षितत्वात् । अत एव यत्र न क्रमापेक्षा यथा सान्नाय्यादौ एकप्रयोगविधिपरिग्रहेऽपि सप्रतिपन्नैकदेवतात्वेन सहानुष्ठानात्, यत्र वा भिन्न-

प्रयोगविधिपरिग्रहो यथा तत्तत्प्रकर्मणाम्, तत्र न पाठो नियामकः । तत्र तु स्वाध्यायत्वसिद्ध्यर्थं एवोप युज्यते इति द्रष्टव्यम् ।

मण्डन— 'समिदादौ क्रम पाठात् ।' ५

शंकर— 'पाठक्रमात् क्रमश्च स्यात् ।' ६

* पाठक्रमन्याय । ५।१।४।४–७ । पाठक्रमन्यायानुसारेण प्रयोजकप्रधानप्राक्स्मृतिद्वारा प्रयमहवि शेषस्यैव प्राक् स्मृति । मु पृ १५४२.

* पाठसादेश्य द्विविधम्– यथासंख्यपाठ सनिधि पाठश्चेति । ऐन्द्राग्नादीष्टीना काम्ययाज्यानुवाक्याना चाङ्गाङ्गिभाव, यथासंख्यपाठात् । वैकृताङ्गाना विकृत्यर्थत्व सनिधिपाठात् । मीन्या

* पाणिनिना नार्थानुशासन कृतम्, किं तर्हि' यथा लोके अवस्थितोऽर्थस्तथास्थितस्य शब्दानुशासन कृतम् । भा ६।१।६।२२ पृ १३७४

* पाणिनिकात्यायनपतञ्जल्यो व्याकर्तार मध्य विद्यमाना । वि १।३।९

* पातञ्जला ईश्वर जगत्कारण मन्यन्ते । (इद चिन्त्यम् । के ) । मु पृ १२१

* 'पात्नीवतमुत्सृजन्ति' इति न कर्मान्तरम्, पूर्वस्यैव उत्सृजतिशब्देन अवच्छेदो विधीयते । उत्सर्गान्त मेवेद पशुकर्म । २।३।८।१९. * पात्नीवत ग्रह आग्रयणात् उपांशुपात्रेण गृह्णाति । भा ३।२।१३।२१ * पात्नीवतस्य पशो पर्यग्निकरणान्तत्व गुण 'पर्यग्नि कृत पात्नीवतमुत्सृजन्ति' इति । वि २।३।८

## पात्नीवते तु पूर्वत्वादवच्छेद । २।३।८।१९ ॥

त्वाष्ट्र पात्नीवत विधायाह–'पर्यग्निकृत पात्नीवतमुत्सृ जति' इति । तत्र सदेह किं त्वाष्ट्रस्य पर्यग्निकृतस्यैव उत्सर्गो विधीयते, उत तस्माद्यागान्तरमिति । आरम्भनिर्वापयो प्रत्युदाहरणत्वेन यन्निमदभिधान निराकृत्येदानीं प्रकृतोदाहरणेऽपि यन्निमदभिधान निराक्रियते । अत्राय पूर्व पक्षिणोऽभिसंधि – यद्यपि 'त्वाष्ट्र पात्नीवतमालभेत' इति याग विधाय त प्रकृत्य श्रूयते 'पर्यग्निकृत पात्नीवतमुत्सृ जन्ति' इति, तथापि पूर्वेण गुणविधानासभवात् कर्मान्तर विधिरेवायम् । तथाहि, न तावत् पूर्वस्मिन् यागे विकल्पेन पात्नीवतशब्दोपनीता रुका देवता विधीयते, उत्पत्तिशिष्टदेवताऽवरोधात् । नापि पर्यग्निकरणम्, अतिदेशप्राप्तत्वात् । नाप्युत्सर्ग, उत्पत्तिवाक्येनोपलब्ध त्वात् । तेन श्रायश्चावचयवत् पत्नीवच्छब्दाभिधेयद्रव्य देवतान्वयार्थमनन्तोऽत्र विधि कल्पितयज्ञिशब्दप्रति पाद्य यागान्तरमेव द्रव्यदेवताविशिष्ट देवतागुणसामान्येव पूर्वयागप्रकृतिकम्, अग्नीषोमीयप्रकृतिकमेन या निदधाति इति । एव प्राप्ते, अभिधीयते । भेदेन यदि प्रकृतगुण विधिर्न सभवत् । तत्र यद्यप्यये गुणा न विधीयन्ते तथापि पर्यग्निकरणान्तानि अङ्गान्येव अत्र विधास्यन्ते । तथाहि, कथम्भावाकाङ्क्षी त्वाष्ट्रप्रयोगवचन प्रकृतौ क्लृप्तोपकारक ण्यङ्गानि अपेक्षमाण पर्यग्निकृतशब्दोपनीतान्येव तदन्तानि अङ्गानि औपदेशिकानि गृहीत्वा चरितार्थो नातिदेश लभ्यानि अङ्गान्तराण्यपेक्षते । ननु 'इष्टान्ता आविष्या इतिष्ठते' इत्यादिवच्च नात्र पर्यग्निकरणान्ताङ्गप्रतिपादक शब्दोऽस्ति । अत कथ तदन्ताङ्गविधानम् । उच्यते । पर्यग्निकृतशब्दो हि निर्वृत्तयथाप्रसिद्धपर्यग्निकरणविशिष्ट द्रव्यमुपादत्ते । तच्च पर्यग्निकरण पूर्वाङ्गेषु कृतेष्वेव प्रकृतौ निर्वृत्तम्, तेन पर्यग्निशब्दोऽत्र प्रकृतचोदनाप्रतिपादित मन अङ्गकलापमुपनयति । स एवात्र उत्सृजत्याख्यातवर्तिना विधिना उत्सर्गानुवादेन विधीयते नैवोत्सर्ग । विधि प्रत्ययमविधिविशेषेण भाष्यकारेणोक्तम् 'उत्सर्गो विधीयते' इति । न च वाच्यम् 'अतिदेशतोऽपि प्राप्तस्य किं विधिना' इति । उत्तराङ्गपरिच्छेदफलत्वेन विधिसाफल्य स्यात् । न चैव सति परिसंख्या, अतिदेशप्राप्ते प्राप्तेन विधिप्राप्ते । नापि वाच्यम् 'यदुत्सृजन्ति तत्पर्यग्निकृत मित्येतावतैव वाक्यसमाप्तौ पुन पात्नीवतमिति विशेषणे विशिष्टानुवादात् वाक्यभेद स्यात्' इति । यतो नोद्देश्य विशेषण पात्नीवतशब्दार्थ, विनाऽपि विशेषण प्रकरणादेव पर्यग्निकरणविधे त्वाष्ट्रलाभात् । किञ्च नियमानुवादो ऽयम् । अनुवादस्य च यद्यपि प्रयोजन नास्ति, तथापि भिन्नतद्धितान्ताभिधेयदेवतयो समुच्चये एकेनापि तद्धितान्तेन पदेन तदभिधान शक्यम्, नत्वेकतद्धितान्त पदाभिधेययो समुचितदेवतयोरग्नीषोमयो अन्यतरपदेनेति

ज्ञापनार्थं प्रकृतमन्त्राभिधानद्योतनमेव प्रयोजनम् । अतः प्रकृतमन्त्राभिधाने त्वाष्ट्रयाग एव पर्यग्निकरणान्तादूर्ध्वरीति-विधानमिति सिद्धम् । तदुक्तम् — 'प्रकृतमन्त्राभि-धानान् प्रयोगोऽन्योऽवगम्यते । पर्यग्निकरणात् तस्मिन्नूर्ध्वरीतिर्विधीयते ॥' इति । (वा.पृ.६०७)।

नन्वेवं सति गृहमेधीयेन सहास्य को विशेषः ? उच्यते, अत्र देवताऽभिधानं निराकृत्य गुणविधित्व-व्युत्पादनेन स एव न्यायः स्थिरीक्रियते इति नानुपपन्नं किञ्चित् । प्रयोजनम्– पूर्वपक्षे केवलपत्नीवद्देवताक-यागान्तरानुष्ठानम् । सिद्धान्ते नेति । सूत्रं तु पात्नीवते पत्नीवत्त्वयुक्तत्वाष्ट्रे पूर्वत्वानुपदेशेनैव प्राकृतधर्मसंबन्ध-संभवात् पर्यग्निकरणान्ताङ्गातिरिक्ताङ्गानामवच्छेदः फलं विधेरित्यर्थः । कौमा.

▣ पात्नीवते तु पूर्वत्वादवच्छेदः । ३।३।८।१९ ॥

त्वाष्ट्रं पात्नीवतं विधाय 'पर्यग्निकृतं पात्नीवतमु-त्सृजन्ति' इत्युच्यते । अत्र किं त्वाष्ट्रस्य पर्यग्निकृतस्य एव उत्सर्गो विधीयते उत तस्माद्यागान्तरम्, उत्सृजन्तिरपि यागेरभिधाने न वा, उत्सृजतिः गुणविधिः, उत कर्मा-न्तरं इति विचारे यागान्तरमिति पूर्वपक्षे सिद्धान्त-माह । तुशब्दः पूर्वपक्षं व्यावर्तयति । पात्नीवते 'पर्यग्नि-कृतं पात्नीवतम्' इति वाक्ये न कर्मान्तरविधिः । किन्तु पूर्वत्वात् प्रकृतमन्त्राभिधानात् पर्यग्निकरणान्ताङ्ग-कलापविधानेन उत्तराङ्गानामवच्छेदः निवृत्तिरुक्ता । तस्मात् पूर्वस्य कर्मणः अवच्छेदः पर्यग्निकरणान्ताङ्ग-कलापेन परिसमाप्तिः उत्सृजतिवाक्येनोक्ता इति सिद्धान्तः । के.

▣ पात्नीवते तु पूर्ववत् । ३।२।१३।३३ ॥

अग्निष्टोमे प्रातःसवने ऐन्द्रवायवमैत्रावरुणाश्विना द्विदेवत्या ग्रहाः सन्ति । तेषु हुतेषु तदीयाः शेषाः आदित्यस्थाल्यामवनीयन्ते । अस्ति च तृतीयसवने आदित्यग्रहः । स च सशेषं हूयते । अस्ति च तृतीय-सवने आग्रयणग्रहणविधिः । 'कलशेभ्यो धाराभ्यः आग्र-यणं गृह्णाति' 'आग्रयणादुत्सिच्य द्वितीयां धारां करोति' 'आदित्यस्थाल्याः तृतीयाम्' 'आदित्यग्रहपात्रात् चतुर्थीम्' इति । तदेवमस्मात् आग्रयणात् पात्नीवतग्रह-ग्रहणमाम्नातम् 'आग्रयणात् पात्नीवतं गृह्णाति' इति । अथ तस्मिन् पात्नीवते हुते तच्छेषे भक्ष्यमाणे भक्षमन्त्रे कथं देवतानिर्देशः कर्तव्यः इति विचारे पूर्वपक्षमाह । पूर्ववत् पूर्वाधिकरणसिद्धान्तरीत्या पात्नीवते सोमभक्षे सर्वेषां देवतानामुपलक्षणं कर्तव्यम् 'वाय्विन्द्रवायुमित्रा-वरुणाश्व्यादित्यपत्नीवत्पीतस्य' इति पठनीयम् ।

ग्रहणाद् वाऽपनीतः स्यात् । ३४ ॥

वाशब्दः पूर्वाधिकरणसिद्धान्तवैरूप्यं सूचयति । पुनर-भ्युन्नीतस्यैव उत्पवनेन मित्रावरुणादिदेवताऽन्तरधर्मतया गतग्रहस्यापि ऐन्द्रवायवस्य मित्रावरुणादिदेवताऽनार-सम्बन्धाभावात् न पूर्वदेवताऽपनयः इति युक्तम् । 'आग्र-यणात् पात्नीवतं गृह्णाति' इति पात्नीवते तु द्विदेवत्या-विशेषसंसृष्टात् आग्रयणात् गृह्यमाणस्य संसृष्टरूपेणैव पत्नीवद्देवताऽन्तरार्थतया ग्रहणात् पूर्वशेषः पूर्वदेवता-संबन्धादपनीतः स्यात् । तस्मात् पात्नीवतशेषभक्षमन्त्रे 'पत्नीवत्पीतस्य' इत्येवोहः । के.

* पात्नीवते त्वाष्ट्रस्तन्त्रता । वा. ३।१।१५।२६ । 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इत्यत्र पात्नीवतशब्दस्य पशूपलक्षणार्थत्वात् त्वाष्ट्रस्तु तत्रापि 'पात्नीवतेऽनुपूर्वत्वा-दवच्छेदः' (३।३।८।१९) इत्यत्रोक्तः । सु. पृ. १०७३.

▣ पात्नीवते पशौ 'आज्येन शेषं संस्थापयति' इति वाक्येन कर्मान्तरविधानम् ॥

आज्यसंस्था प्रतिनिधिः स्याद् द्रव्योत्सर्गात् । ९।४।१४।५६ ॥

भाष्यम्— 'पर्यग्निकृतं पात्नीवतमुत्सृजति' इति प्रकृत्य श्रूयते 'आज्येन शेषं संस्थापयति' इति । तत्र सन्देहः किमाज्यं पूर्वस्मिन् (कर्मणि) प्रतिनिधी-भूतम्, अथवा आज्यद्रव्यकं पूर्वस्मात् कर्मान्तरं विधी-यते इति । किं प्राप्तम् ? प्रतिनिधिरिति । कुतः ? पात्नीवतमिति द्रव्यमुच्यते । उत्सृजति इति तस्यैव उत्सर्गः श्रूयते । शेषं इति तदपेक्षितम् नियमतः गम्यते । तद् आज्येन संस्थापयति इति पशोः कार्ये आज्यं श्रुतं भव-तीति । ननु पूर्वकर्म परिसमाप्तमित्युक्तम् । अत्रोच्यते ।

द्रव्योत्सर्गवचने प्रत्यक्षे, शेषशब्दे वा अपरिहृते पुन रसमाप्त पूर्वकर्म इत्याशङ्क्यते । तस्मात् प्रतिविधीयते आज्य इत्याशङ्कामहे । संस्थापयति इति चापूर्वे नोपपद्यते ।

**समाप्तिवचनात् । ५७ ॥**

**भाष्यम्**— इत्थमाशङ्कामहे । समाप्तिवचनमिदं भवति ' संस्थापयति ' इति । तेन मन्यामहे यत् पूर्वं पशुना आरब्धम्, तत् उत्सृष्टे पशौ आज्येन परिसमाप्यते इति । अपूर्वस्याप कर्मण उच्यमानस्य आरम्भ एव वक्तव्यो भवति । यत्तु अनभिधाय आरम्भं परिसमाप्तिरेवोच्यते, ततोऽवगच्छाम पूर्वस्यैव परिसमाप्तिः, नापूर्वं कर्म चोद्यते इति ।

**चोदना वा, कर्मोत्सर्गादन्यैः स्यादविशिष्टत्वात् । ५८ ॥**

**भाष्यम्**— कर्मान्तरचोदना वा । कुतः ? पूर्वस्य कर्मणः परिसमाप्तत्वात् । ननूक्तं द्रव्योत्सर्गे शेषवचने वा अपरिहृते पूर्वकर्मणः असमाप्तिराशङ्किता भवति । अत्रोच्यते । इदं द्वयमपि परिहियते । संस्थापयति इति मङ्गलेन पालीवतशब्देन समप्यते । तत्रायमर्थः, ' पालीवतं संस्थापयति ' इति । स एव यागो विधीयते । सपूर्वस्य स्थापयतिः प्रयुज्यते । अस्त्येव कश्चित् धातुः सपूर्वो भावनावचनस्य प्रयोक्तव्य इति । तथा विरुद्धो भावनायामुच्यमानाया अर्थप्राप्तः संस्थापयति आलभतिरिव प्रयुज्यते, शेषशब्दश्च एव सादृश्यात् प्रयुज्यते । द्रव्योत्सर्गश्च अविरुद्धः एव यागे उच्यमाने । तस्मात् यथा अन्ये निर्वपत्यादय कर्मान्तरविधाने भवन्ति, एवं तैरविशिष्टत्वात् संस्थापयतिरपि भवितुमर्हतीति ।

**अनिज्यां च वनस्पतेः प्रसिद्धां तेन दर्शयति । ५९ ॥**

**भाष्यम्**— प्रसिद्धां वनस्पतेरनिज्यां अत एव दर्शयति । कथम् ? ' यत् त्वष्टारं च वनस्पतिं( निं चाया )नावाहयति, अथ यैतौ यजति, त्वाष्ट्री नरर्भां प्रमायेत्, यानस्य दग्धौ । अवैतौ यौ विदन् ' इति अन्तान्तरेण अनुमह्य कुर्वन् वनस्पतीज्याया अभाव दर्शयति । नेपद्यन्तात्मी कन्याम् ' वनस्पतिं जुहोति ' इति वनस्पतीज्या क्रियते । अथ परिसमाप्तं पूर्वं कर्म, ततो इज्या स्यात्, तत अभावदर्शनमुपपद्यते । तस्मात् पूर्वकर्म परिसमाप्तम् । इदमपि कर्मान्तरमिति ।

**संस्था तद्देवतत्वात् स्यात् । ६० ॥**

**भाष्यम्**— अथ यदुक्तम् ' संस्थापयति इति चापूर्वे नोपपद्यते ' इति, तत् परिहर्तव्यम् । अत्रोच्यते । अवस्थाया संस्थावचनमेतत् । तदपि पूर्वं पालीवतमिति समानदेवतत्वात्, समाप्तिसादृश्यं ज्ञायते । तत्र तत् पालीवतमारब्धम्, इह परिसमाप्तमिति । स एव सादृश्यात् संस्थापयति इति शब्दः अवकल्पते इति ।

सोम— पूर्वाधिकरणे ' आज्येन शेष (सं)स्थापयति ' इत्यादि लिङ्गदर्शनेन प्रसक्तम् । तत्र च यागान्तरविधित्वे एव तस्य लिङ्गत्वमुपपद्यते इति तस्य यागान्तरविधित्व समर्थनात् संगतिः । सूत्रार्थस्तु— ' आज्येन शेष (सं)स्थापयति ' इत्यत्र आज्य प्रतिनिधिः स्यात् पशुद्रव्यस्य उत्सृष्टत्वेन कर्मणो द्रव्यापेक्षत्वादिति ।

वि— ' आज्येन शेषमित्युक्तौ द्रव्यप्रतिनिधिर्भवेत् । कर्मान्यद् वा, ऽयिमस्त्याग्नेशेषसंस्थापनोक्तिभि ॥, अङ्गीरत्या समाप्तवाद् देवतोक्त्यनुवर्तनात् । आम्नातेभ्यः सक्लिविश्रु याग आलम्भनादिवत् ॥ '

भाट्ट— पालीवतवाक्ये पुनराक्षेपः । तत्र हि ' पर्यग्निकृतं पात्नीवतमुत्सृजति ' इत्युक्त्वा ' आज्येन शेषं संस्थापयति ' इति श्रुतम् । अपूर्वत्वे हि शेषत्वस्याऽनुपपत्तेः पर्यग्निकरणवाक्ये पर्यग्निकरणान्तरहितोत्तरमेव प्रधानयागवर्तमानता अपहृत्य विधीयते । तत्करणे च विशसनादिपदार्थलोपेऽपि अन्याङ्गलोपे प्रमाणाभावात् शेषं यत् स्विष्टकृदवदानादि, तत् आज्येन संस्थापयति इति विधीयते । यद्यपि च प्रयाजादौ आज्यं प्रकृतेः, तथापि स्विष्टकृद्वनस्पतियागादौ आज्यविधिर्न विरुध्यते । न च विशसनाभावादेव प्राप्तसंभवात् ' यस्य सर्वाणि हवींषि ' इत्यनेनैव स्विष्टकृत्यपि आज्यप्राप्तिः शङ्क्या, नाशादिनिमित्ताभावेन तदप्राप्तेः । विशसनस्य अपि प्रधानयागाचरणेन प्रयुक्तत्वात् प्राप्त्युपपत्तेश्च । वनस्पतियागादौ आज्यविधेरपि उपपत्तेश्च । नहि अत्र कर्मान्तरत्वे किञ्चित् प्रमाणमस्ति, प्रत्युत शेषसंस्थापनदोषोऽप्यस्ति ।

इति प्राप्ते, 'यत् त्वष्टार च वनस्पतिं (च) आवाहयसि अथ केतो यक्ष्यसि' इति पृष्टे 'त्वाष्ट्री नवमी प्रयाजेज्या, वानस्पत्या दशमी, अनेनैतौ इष्टौ विद्यात्।' इति वनस्पतियागस्य अङ्गान्तरेण अनुग्रहवचनेन अभावावगतेः, तस्य च अपूर्वत्वमन्तरेण अनुपपत्तेः न पूर्ववाक्ये प्रधानापूर्वप्रयाजविधिः, अपितु तदन्याङ्गरीतिविधिरेव अपूर्वत्वफलकः। यद्यपि चाक्रियमाणस्य वनस्पतियागस्य देवताऽऽवाहनमपि नैव प्राप्यते, तथापि सिद्धवन्निर्देशान्यथाऽनुपपत्त्यैव आवाहनविधिकल्पना। रत्नस्तु प्रधानदेवतान्यदेवावाहनानिरोधः, प्रयोगमात्राभिप्रायेण च नवम्या अनुग्रहोक्तिः। अतश्च पूर्वकर्मणि शेषाभावेन आज्यनिधानानुपपत्तेः गुणात् कर्मान्तरमेवेदं आज्यद्रव्यक अनुपक्रमपत्नीवद्देवत्वं उपांशुयाजप्रकृतिकम्। शेषउत्साहाम्बौ तु पूर्वस्य कर्मणः असमाप्तप्रायत्वया कथञ्चित् अनुवादकाविति। सिद्धान्तिविषय ऊहः। १३.

मण्डन-- 'सत्साम्येन पृथग्यजिः।' १४.

शंकर-- 'आज्यशेषवचस्तथापि।' यागः। १५.

* पात्नीवताधिकरणम्। ३।५।१३।३३-३४. 'पूर्वदेवतानुपलक्षणाधिकरणम्' इत्यत्र द्रष्टव्यम्। * पात्नीवताधिकरणम्। २।३।८।११. मीको पृ. १९९० 'त्वाष्ट्रपात्नीवताधिकरणम्' इत्यत्र द्रष्टव्यम्।

* (देवताकर्तृक)स्वीकाराङ्गीकरणावश्यकत्वं पात्नीवताधिकरणाद् उत्पादितम्। कौ. ३।२।१८।४०.

* विधिसत्त्व निःसंदिग्धस्य पात्नीवतपदस्य देवतापरत्वोपपत्तेः मानानुमापकत्वं इति पात्नीवताधिकरणपूर्वपक्षन्यायस्वरूपम्। कौ. २।३।८।१९ पृ ५५.

* पात्नीवतपदस्य याज्यामन्त्रः 'ऐभिरग्ने सरथं याह्यर्वाङ्०' इति। भा. ३।२।१५।१७. * पात्नीवतभक्षस्य होममन्त्रः 'अग्नाइ३ पत्नीवा३न् सजूर्देवेन त्वष्ट्रा सोम पिब स्वाहा' इति। मि. ३।२।१४. * पात्नीवतभक्षे पत्नीवानेव उपलक्षणीयः नान्यदेवता। भा. ३।२।१३।३३-३४.

* पात्नीवतभक्षणाधिकरणम्। पात्नीवतभक्षणे पूर्वदेवता इन्द्रादयो नोपलक्षणीयाः, किन्तु 'पत्नीवत्पीतस्य' इत्येव पठनीयम्। (कुत्वाचिन्ता। वस्तुतस्तु 'इन्द्रपीतस्य' इत्येव पठनीयम्। के.)। ३।२।१३।३३-३४. 'पूर्वदेवताऽनुपलक्षणाधिकरणम्' इत्यत्र द्रष्टव्यम्।

* पात्नीवतयागे साक्षात् पशुरेवाङ्गम्, न तु हृदयादीनि 'पर्यग्निकृतं पात्नीवतमुत्सृजन्ति' इति उत्सर्गविधानात्। मीन्या.

* पात्नीवतसोमभक्षणे अयजिगता देवाना नोपलक्षणम्। कुत्वाचिन्ता। ३।२।१५, मीको. पृ. १९६७ 'निरादधिकरणम्' इत्यत्र द्रष्टव्यम्।

* पात्नीवतसोमभक्षणमन्त्रे ('पत्नीवत्पीतस्य' इति) त्वष्टुर्नोपलक्षणम्। (कुत्वाचिन्ता)। ३।२।१४. मीको. पृ. १९८९ 'त्वष्ट्रधिकरणम्' इत्यत्र द्रष्टव्यम्।

* पात्रं अनुयाजार्थपृषदाज्यधारणार्थं प्रयाजान्यपात्रमिव अग्नीषोमीये पशौ। ५।२।८।१६. * पात्रं प्रयाजशेषधारणार्थं शेषधारणं च वाजपेयगतप्राजापत्यपशुष्वपाऽभिघारणार्थं न कर्तव्यम्। ४।१।१४. * पात्र धारणैकाङ्गतादिजन्यं दर्शपूर्णमासादिसर्वयज्ञेषु विनियुज्यते। वि. १।१।१२. * पवित्रं हि सोमः, न तस्मिन् भक्षिते पात्रं व्यापद्यते। तत्र चमसेन शक्यते होतुम्। भा. ३।५।७।२२. * पात्राणि 'आहिताग्निमग्निभिर्दहन्ति यज्ञपात्रैश्च' इति यज्ञपात्राणां प्रतिपत्तिः। 'दक्षिणे पाणौ जुहूमासादयति'। ततश्च यज्ञपात्राणि प्रथमप्रयोगमारभ्य आमरणान्तं धार्याणि। इति पुनः पुनः प्रयोगान्तरेषु तान्येव प्रयोक्तव्यानि। वि. ११।३।११, * पात्राणि एकस्मिन् प्रयोगे प्रयुक्तान्यपि पुनः प्रयोगान्तरे प्रयोगार्हाणि न भवन्ति। प्रक्षाल्य अर्हाणि। ११।३।१२। तान्येव पात्राणि प्रक्षाल्य पुनः पुनर्मार्जनाणि, न ▮ इच्छया भेदः। अन्त्येष्टिपर्यन्तं तद्धारणस्यावश्यकत्वात्। ११।३।१२. * 'पात्राणि तु वदेदग्नौ यजमाने वृथा मृते' अयं क्रियाप्रतिनिधिनियमविधिः। बाल. पृ. २३. * पात्राणि सर्वे साधारणानि पृथक्त्वेन कर्तव्यानि। ६।८।६।२३-२४. * पात्रैः ऐष्टिकैरेव सौम्यचरोः उपनीयपुरोडाशादीना च ज्योतिष्टोमे होमः, न तु सोमिकैः चमसादिभिः प्रसङ्गसिद्धिः। १२।१।८।१०-११, * पात्राणां यज्ञायवचवाक्येन प्रकरणादाधानाङ्गत्वबाधः।

सु. पृ. १०६३. ● पात्राणां यज्ञियानामाधानमारभ्यैव यावन्मरणं धारणं कर्तव्यम् । ११।३।१४. ● पात्रे एकस्मिन् बहुभिः सोमभक्षणे होतुः प्रथमं भक्षः । ३।५।१३।३६–३९.

■ पात्रेषु च प्रसङ्गः स्याद्धोमार्थत्वात् । १२। १।४।१०॥

. होमे यानि दर्शपूर्णमासप्रकृतीनि कर्माणि यथा सवनीयः पशुः, सवनीयाः पुरोडाशाः, सौम्यश्चरु इति, तेषां होमः दार्शिकैः पात्रैः कर्तव्यः । पात्रेषु च तेषां मिथः प्रसङ्गः स्यात् । यथा सौमिक्या वेद्या दार्शिक्याः प्रसङ्गः, तथा सौमिकैः पात्रैः दार्शिकपात्राणां प्रसङ्गः । होमार्थत्वात् सौमिकान्यपि पात्राणि होमार्थानि । तस्मात्तैः सिद्धिः इति पूर्वः पक्षः ।

न्याय्यानि वा प्रयुक्तत्वादप्रयुक्ते प्रसङ्गः स्यात् । ११ ॥

सोमे यानि दर्शपूर्णमासप्रकृतिकानि कर्माणि, तेषां होमे दार्शपूर्णमासिकानि पात्राणि प्रयोक्तुं न्याय्यानि । दार्शिकैः पात्रैः तादृशो होमः कर्तव्यः । प्रयुक्तत्वात् सौमिकानाम् प्राक् आज्यासादनात् प्राकृतस्य तन्त्रस्य प्रक्रान्तत्वात् 'अथ यद्गृहीत्वा आज्यानि सोममासाद येयुः अपघ्नन्ति यजमानम्' इति वाक्येन । अप्रयुक्ते यदि दार्शिकं पात्रं प्रयुक्तं न स्यात् तदा सौमिकैः पात्रैः दार्शिकानां पात्राणां प्रसङ्गः स्यात् । तानि तु अप्रयुक्तान्येव पूर्वं इति दार्शिकैरेव सवनीयपुरोडाशादि होमः स्यात् इति सिद्धान्तः । के.

● पात्रेषु दार्शपौर्णमासिकेषु सवनीयपुरोडाशानामैष्टिकहोमयोः सौमिकैः पात्रैर्न प्रसङ्गः । ज्योतिष्टोमे । १२।१।४।१०–११.

■ पात्रापात्रविचारस्तु धेनुपन्नगयोरिव, इति न्यायः । यथा– 'तृणमश्नाति धेनुः क्षीरं क्षीरमश्नाति पन्नगः विषम्' इति । गावस्तृणं खादन्ति क्षीरं ददति । सर्पाश्च क्षीरं पिबन्ति विषं ददति । एवं ज्ञात्वा पात्रापात्रविचारः कर्तव्य इति भावः । माहुली. ७७७.

● पात्रन्यायेन प्रधानगुणापेक्षया संसर्गयुक्तां भेदेन कर्तुं शक्यत्वात् न प्रसङ्गोपपत्तिः (पात्रभेदन्याय एवायम् । ५।२।८।१६) । कौ. २।१।५।१२ पृ. ८५. ● न च एवमपि पात्रन्यायेन हविरासादनरूपस्य कार्यस्य पृथगनुष्ठेयत्वात् न प्रसङ्गोपपत्तिः, कर्तृप्रचारार्थमनुष्ठितैव सौमिकेनैकिकरणेन अदृष्टविशेषावच्छिन्नाहवनीयप्रदेशरूपायां वेदेः सिद्धत्वात् ऐष्टिकवेदिकरणविरहेण प्रसङ्गोपपादनात् । २।१।५।१२ पृ. ८४–८५.

● सान्नाय्यपात्रप्रोक्षणे 'शुन्धध्वम्' इत्यादिर्मन्त्रः लिङ्गविपाठात् विनियुज्यते । वि. ३।३।५

■ पात्रभेदन्यायः । पात्रन्यायः । अग्नीषोमीये पशौ अनुयाजार्थस्य पृषदाज्यस्य धारणार्थं पात्रं भिन्नम् ॥

विकारे त्वनुयाजानां पात्रभेदोऽर्थभेदात् स्यात् । ५।२।८।१६ ॥

भाष्यम्— अस्ति ज्योतिष्टोमे पशुरग्नीषोमीयः । तत्र श्रूयते 'पृषदाज्येन अनुयाजान् यजति' इति । तत्र संदेहः किं प्रयाजानुयाजानामेकं पात्रं आज्यस्य पृषदाज्यस्य च धारणार्थम्, उत भिद्यते । किं प्राप्तम् ? एकमिति । कुतः ? प्रकृतौ एकम् । प्रकृतिवदिहापि एकेन भवितव्यम् । एवं प्राप्ते, ब्रूमः । पात्रभेदः स्यात् । कुतः ? अर्थभेदात् । शुद्धस्य प्रयाजा अर्थः, पृषतोऽपि अनुयाजाः । पृषति गृह्यमाणे प्रयाजानां वैगुण्यम्, शुद्धे अनुयाजानाम् । न च एकस्मिन् पात्रे विविक्तं ग्रहणं कर्तुम् । मर्यादायामपि नियमाभावात् प्रदीयमानं सङ्कीर्येत । अपि च आकारभेदात् उपभृतः उपभृता विहन्येत । पाणिमात्रपुष्करा हि सा एकपुष्करा च । अथोच्येत पृषदाज्यमपि आज्यमेव इति मिश्रत्वे न दोषायेति । नैतदेवम् । प्रकृतौ उत्पन्नविशेषणयोः प्रयोजनभेदेन न आज्यस्य अपरेण द्रव्येणासंसर्गः । एवं चेत् अनुपपन्नम्, यत् प्रयाजाः पृषदाज्येन इज्येरन्निति । अपि च एवं सति अप्रत्यक्षं हविः स्यात् विभागाश्च अपनीयेत । न च शक्यं प्रयाजकार्ये अपरिमिते अनुयाजार्थं ग्रहीतुम् । प्रकृतौ एककाले ग्रहणम् । इहापि एककाल एव कर्तव्यम् । तस्मात् पात्रभेद इति ।

टुप्— (पूर्वपक्षमाह—) प्रकृतौ उपभृत एकत्वम् ('यथाप्रकृति गृह्णाति' इत्युपदेशगतत्वात्) । तत्र विकृतावपि (देशेः) तत्रैव पृषदाज्यग्रहणं प्रकृतौ

* पात्री तन्त्रैकदा राजसूये नानाबीजेष्टौ । भाट्ट. ५।२।७ * पात्र्याम् 'स्योन ते सदनम्' इत्यादिपूर्वार्धरूपमन्त्रेण आग्नेन पुरोडाशस्य सदनं कृत्वा 'तस्मिन् सीद' इति मन्त्रेण पुरोडाशासादनं कार्यम् । वि. ३।२।८.

* पाथिकृतादीनां नैमित्तिकानां यागानां पाठक्रमो न नियामकः, किन्तु यथानिमित्तमनुष्ठानम् । ५।३।१२.

* पाथिकृतीष्टिर्वैश्वानरेष्टिर्वा दर्शस्य पूर्णमासस्य वा स्वकाले अकरणे प्रायश्चित्तं विकल्पेन । १२।३।९।१६.

* पादनिचृत् गायत्री । पादेषु अक्षराणि ७।७।७ । उदा॰ 'त्वामग्ने पुरूरवो' (ऋसं. ८।४६।१) । के.

* पादप्रग्रथनेन ब्रह्मसामगान गानमयने । वि ९।२।६ वर्णकं ४.

* पादव्यवस्था ऋक्षु अवसंयक्तिते ऽर्थे वृत्तवशेन । भा. २।१।१०।३५.

* पादसंगतिः । पादानां ऐकार्थ्यनियमाभावात् नावश्यं सर्वत्र पादसंगतिः अपेक्षणीया । एकप्रकरणगतानां तु अधिकरणानां प्रकरणप्रतिपाद्यैकार्थ्यनियमात् प्रकरणसंगतिः अवश्यापेक्षणीया । सु. पृ. ३७०.

* पादिनः ऋत्विजः । पादोऽस्ति प्रत्येकं येषां दक्षिणायाश्चतुर्थांशः ते पादिनः । द्वादश गावः पूर्णा दक्षिणा, तत्पादः तिस्रो गावः । उन्नेता आध्वर्यौः, पोता ब्रह्मणः, ग्रावस्तुत् होतुः, सुब्रह्मण्य उद्गातुः, एते पादिनः । वि. १०।३।१३.

# पानव्यापच्च तद्वत् । ३।४।१२।३२ ॥

'ऐन्द्रं चरुं निर्वपेत् श्यामाकं सोमवामिनः' इति श्रूयते । अत्र चरुः किं लौकिके सोमवमने यत् श्रमयनेषु दरानेषु वा धातुसाम्यार्थं आर्ते वमने सोमे सति यदा चित् जायमाने, किंवा ज्योतिष्टोमे नद्विकृतिषु वा सोमे पीते जायमाने वमने स्यात् इति विचारे पूर्वपक्षमाह । पानव्यापत् यदि पीतस्य सोमस्य व्यापत् वमनं स्यात् लौकिकविषयम्, तदा इव दयामाकेष्टिः स्यात् । तद्वत् अध्यवृत्तिदिविष्टिपूर्वपक्षवत् । लौके धातुसाम्यार्थमसेविते सोमे वमनेन विनष्टे धातुसाम्य न स्यात् । इन्द्रियसामर्थ्यहानिः स्यात् इति लौकिके सोमवमने दोषः स्यात् । वैदिके तु न दोषः स्यात् । तत्र हि 'शेषः पातव्यः' इति शास्त्रात् चोदिते निष्पादिते यद्यपि वम्यते तथापि कृतः शास्त्रार्थः इति न दोषः स्यात् । तस्मात् लौकिकस्य सोमपानस्य व्यापदि वमने सोमेन्द्रश्चरुः स्यात् इति पूर्वः पक्षः ।

# दोषात्तु वैदिके स्यादर्थाद्धि लौकिके न स्यात् । ३३ ॥

पूर्वपक्षं सूत्रेण प्राप्तं तुशब्देन निरस्यन् सिद्धान्तमाह । वैदिके सोमपाने वमने सति सोमेन्द्रश्चरुः स्यात् न लौकिके । दोषात् वमने दोषश्रवणात् 'इन्द्रियेण वा एष वीर्येण व्यृध्यते यः सोमं वमति' इति । लौकिके हि यस्मात् अर्थात् धातुसाम्यं प्रयोजनमभिप्रेत्य सोमपाने कृते, तस्यापि वमने न दोषः स्यात् । वमनायैव हि तं पिबन्ति लोके । तस्मात् लौकिके सोमेन्द्रश्चरुः स्यात् । वैदिके दोषात् चरुः, लौकिके तु दोष एव नास्ति इति सिद्धान्तः । के.

* पानव्यापदि वैदिकस्य पीतसोमपानस्य वमने एव सोमेन्द्रः श्यामाकश्चरुः प्रायश्चित्तम्, न लौकिकस्य । ३।४।१२।३२-३३ । स च यजमानस्यैव वमने, न ऋत्विजः । ३।४।१३।३४-३६.

* पानव्यापदधिकरणम् । 'वमनाधिकरणम्' द्रष्टव्यम् । ३।४।१२।३२-३३.

* पापमस्ति अप्रतिग्रहात् प्रतिगृह्णतः वैदिकेऽपि प्रतिग्रहे । भा. ३।४।१०।२८. * पापान्निवर्तयति प्रतिषेधः । वा. ३।४।४।१३ पृ. ९११. * पापानिवृत्तस्य प्रायश्चित्तश्रवणम् । सोम. ६।८।४.

* 'पापक्षयो हि दुष्करः धर्मयोग्यत्वमेव वा ।' वा १।३।२। पृ. १८९.

* पापक्षयकृत्युपकारादिशेषत्वेन प्रयुज्यते दर्शादिक मेदनहोमादिकं च । बाल. पृ. १०७

* पापफलं हि (कर्म) अकर्तव्यम् । भा ३।८।१०।२८. * विधेय कर्म पापफलं न समवैति । वा ३।४।१०।२८ पृ. ९५८.

* यदा द्रविडादिभाषाप्रसिद्धौ स्वच्छन्दकल्पना तदा पारसीबर्बरयवनरोमकादिभाषासु किं विकल्प्य किं प्रतिपत्स्यन्ते इति न विद्मः । वा. १।३।५।१० पृ. २३६.

● सद्यान्तरधर्मभूतपश्वालम्भनाच्छेदकत्वेन ज्योतिष्टोमस्य परार्थतया उपादानात् 'पारार्थ्ये चैक इष्यते' इत्यनेन न्यायेन एकस्यैव ज्योतिष्टोमस्य प्राथम्यावसायात् नैतद्वशेन सर्वभागगतानां द्वादशाहानां ज्योतिष्टोमपश्वालम्भनागतिः। सु. पृ. ९८३.

● पारिप्लवत्वम्। परितः प्लवन्ते इति परिप्लवाः। ते एव पारिप्लवाः। तेषां भावः पारिप्लवत्वम्, अव्यवस्था इति यावत्। सोम ७।१।१.

■ पारिषद्न्यायः। 'समज्या परिषद् गोष्ठी सभा' इत्यभिधानात् परिषदि सभायां साधुः पारिषद: सभ्यः। तेषामेकस्मिन् मृतेऽपि अवशिष्टैस्तत्कार्यनिर्वाहो यथा भवति, तथा प्रकृतेऽपीत्यर्थः। साहस्री. १५.

■ 'पार्थिवावयवमायाः दोषतोयाद्यनुग्रहात्। जरायुजाद्यो देहा दृष्टा भुवि चतुर्विधाः॥' या. ३।१।७।१२ पृ. ७०२.

● पार्थुरश्मं राजन्यस्य ब्रह्मसाम कुर्यात्। भा. ६।१।७।२८। इति द्वादशाहे भवति वचनम्। ६।६।३।१७। इति ज्योतिष्टोमे नैमित्तिकमेव न नित्यम्। ४।३।२।४. (वस्तुतस्तु इदं वचनं द्वादशाहे एव, ज्योतिष्टोमे नौधसं ब्रह्मसाम, न तु बार्हद्गिरादीनि तत्र श्रूयन्ते। भाष्यकारेण ज्योतिष्टोमग्रहणमन्यथया कृतमिति तन्त्ररत्नादौ स्पष्टम्।)। ● पार्थुरश्मं साम अश्वमेधे समाम्नायते। टुप्. ६।१।७।२८.

● पार्वणौ होमौ स्रुवेण जुहोति 'स्रुवेण पार्वणौ जुहोति' इत्युदाहरणम्। या. ३।६।१।१.

■ पार्वणन्यायः। पार्वणहोमयोर्विकृतौ नातिदेशः॥

पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात् तदभीज्या हि। ९।२।१८।५०॥

भाष्यम्— स्तो दर्शपूर्णमासौ। तत्रेदं समामनन्ति 'स्रुवेण पार्वणौ जुहोति' इति। सौर्यादिषु वैकृतेषु कर्मसु भवति संदेहः, किं तेषु पार्वणहोमौ कर्तव्यौ, न वेति। तत इदं तावत् परीक्ष्यम्, किं कालाभीज्या पार्वणहोमौ उत समुदायाभीज्येति। कालाभीज्यायां तयोः प्रवृत्तिः। समुदायाभीज्यायामप्रवृत्तिः। कुतः संशयः? उभयत्र प्रसिद्धेः। उभयत्र हि पर्वशब्दो लोके प्रसिद्धः, काले समुदाये च, आ हिमवत आ च कुमारीभ्यः। किं तावत्प्राप्तम्? कालाभीज्येति। ततः कालगता प्रसिद्धिर्व्यपदिश्यते। एवं प्राप्ते, ब्रूमः। पार्वणयोर्विकृतेषु कर्मस्वप्रवृत्तिः। कुतः? समुदायार्थसंयोगात्। सतः समुदाये प्रसिद्धिर्व्यपदिश्यते। काले प्रसिद्धिं परिहरिष्याम इति। अतः समुदायवाचित्वात् पर्वशब्दस्य समुदायस्याभिधानपरत्वात् वैकृतेष्वप्रवृत्तिरिति।

कालस्येति चेत्। ५१॥

भाष्यम्— इति चेत्पश्यसि, कालस्य पर्वशब्दो वाचकः, तस्मात् कालाभीज्येति। तत् परिहर्तव्यम्। आभाषान्तं सूत्रम्। प्रकरणेन विशेष्यते।

(अत्र आनन्दाश्रमीये 'प्रकरणेन विशेष्यते' इति उत्तरसूत्रस्य अवतरणात्वेन सूत्रात् प्राक् मुद्रितम्। मीमांसान्दीये विबल्लरीये च 'परेण विशेष्यते' इति पङ्क्तिः, सा च पूर्वसूत्रभाष्यान्ते लिखिता।)

नाप्रकरणत्वात्। ५२॥

भाष्यम्— नास्ति कालस्य प्रकरणम्। अस्ति तु समुदायस्य। तस्मात् प्रकरणेन विशेषेण समुदायवाची गृह्यते, न कालवाची। मन्त्राह। न प्रकरणेन शक्यते पर्वशब्दस्य कालवाचिता बाधितुम्। दुर्बलं हि लिङ्गात् प्रकरणम्। उच्यते। नागमुभयत्र पर्वशब्दो वर्तते। यदि कालवचनः, तत्सम्बन्धात् समुदाये गम्यते। यदि वा समुदायवचनः, तत्सम्बन्धात् काले। अन्यतरवचनो युक्तः, नोभयवचनः। तत्र समुदायवचने कल्प्यमाने प्रकरणमनुगृहीतं भवति। अपि च, पृणातेः पर्वशब्दः। पृणातिश्च दाने प्रसिद्धः। दानानि च समुदायाः। तस्मात् समुदायाभीज्या। एवं शब्दावयवप्रसिद्धिरनुगृहीता भवतीति। तस्माद्विकृतेषु पार्वणयोरप्रवृत्तिः।

मन्त्रवर्णाच्च। ५३॥

भाष्यम्— मन्त्रवर्णाच्च तत्प्रत्ययदनुवादो भविष्यति। 'ऋषभं वाजिनं वयं पूर्णमासं यजामहे' 'अमावास्या सुभगा सुशेवा' इति च। तस्मादपि समुदायाभीज्येति।

**तदभावेऽग्निवदिति चेत् ।५४॥**

भाष्यम्— नैतदस्ति, यदुक्तं वैकृतेष्वप्रवृत्तिरिति । तदभावेऽपि, यद्यपि समुदायवचनोऽयम्, न च वैकृते ध्वयमस्ति समुदाय, तथापि पावणहोमौ भवेतामेव । कुतः । यथा एकशब्दिका देवता भविष्यन्ति । समुदायो वा असंनिहितोऽपि यक्ष्यते यौगपद्यार्थेन । यथा 'अग्निमग्न आवह' इति संनिहित असंनिहितो वा अग्निर्यागार्थेन आवाह्यते । एवमिहापीति ।

**नाधिकारिकत्वात् ।५५॥**

भाष्यम्— नैतदेवम् । आधिकारिकं हीदं वचनं अधिकारवचनम्, यस्याधिकारस्तस्य गुणं विदधातीति । आग्नेयादीनां चाधिकारः । ते चात्र देवता । तेषां होमौ देवताय । एवं यत्र सा देवता नास्ति, तत्र तदर्थौ होमौ न करिष्यते । तस्मात् पार्वणहोमयोर्वैकृतेभ्यो निवृत्तिः ।

( पे-८०-८५ इति षट् सूत्राणि भाष्ये एकाधिकरणत्वेन व्याख्याय उत्तरे द्वे ( ८६-८७ ) सूत्रे अधिकरणान्तरत्वेन व्याख्याते । वार्तिककारेण तु तत् दूषयित्वा प्रकृताधिकरणप्रयोजनप्रतिपादनपरत्वेन ते सूत्रे व्याख्याते । तत्र वार्तिके अत्र वा अधिकरणे निवेश्य उत्तरस्मिन् भागकारीयाधिकरणे वा निवेश्य इति संकोचे पतिता वयम् । परन्तु 'पार्वणहोमयोः पर्वत्वेनैव' इत्युत्तराधिकरणे एव निवेशितमस्माभिरिति तत्रैव द्रष्टव्यम् । )

शा— 'स्रुवेण पार्वणौ जुहोति' इति तद्धितश्रुत्या पर्वदेवत्यौ होमौ किं विकृतिषु अतिदिश्येते, नेति संशयः । ( तदर्थं च किमारादुपकारकौ होमौ, उत संस्कारार्थौ इति, तदर्थं च किं पर्वशब्दः कालवचनः, उत आग्नेयादिसमुदायपर इति चिन्ता । ) तत्र 'काले शब्दस्य मुख्यत्वात् कालार्थीज्येह मन्यते । ( सिद्धान्तमाह— ) पृणातेर्दानकर्मत्वात् कर्मण्यपि च मुख्यता ॥' पृणातेर्दानकर्मणः पर्वशब्दः । स च दीयते यस्मिन् इत्यधिकरणव्युत्पत्त्या कालेऽपि मुख्यः, भाव व्युत्पत्त्या कर्मण्यपि ।

सोम— सूत्रार्थस्तु— पार्वणहोमयोर्विकृतिषु अप्रवृत्तिः, पर्वशब्दस्य कर्मसमुदायार्थपरत्वात् । तत्त्व तदभीज्यति ।

वि— 'सौर्यादौ पार्वणौ होमौ स्तो न वा, प्रकृ-देवत्वे । स, सदेवत्वौ समाविकारत्वात्र तत्र तौ ॥' ( 'कामं वाजिन वयं पूर्णमासं यजामहे' इत्यादि पूर्णमासगतपार्वणहोममन्त्र । 'अमावास्या सुभगा सुशेवा धेनुरिव भूय आप्यायमाना' इत्यादि दर्शगतपार्वण-होममन्त्र । )

भाट्ट— दर्शपूर्णमासयो 'स्रुवेण पार्वणौ होमौ जुहोति' इति श्रुतम् । तत्र सत्याभिन कर्मद्वय स्रुवत्व देवताविशिष्ट विधीयते । न च हवि समभिव्याहाराभावात् नाय देवतातद्धित, सत्र यथासामान्यवाचिन एव योग्यतया देवतापरत्वोपपत्त । तदिदं होमद्वय विकृतावतिदिश्यते न वेति चिन्तायाम्, प्रयाजवदतिदेशसंभव । न च पर्वशब्दवाच्यकर्मसमुदायस्यैवात्र देवताभूतस्य उद्देश्यत्वे संस्कारात्, तस्य च विकृतौ अभावादनतिदेश, पर्वशब्दस्य काले मुख्यतया कर्मणि लक्षणाङ्गीकारे प्रमाणाभावात् । अतोऽत्र कालस्यैव देवतात्वात्, तस्य चासंस्कार्यत्वात् आरादुपकारकयोरनयोर्युक्त एवातिदेश । यदि तु कालस्यापि कर्माङ्गतयोपयोगात् स्मृतिनत्वेन सर्वादौ स्मृत-त्यापि पुनरावर्त्तिस्वभावनानिमित्तकाश्रद्धापरिहारार्थं कालमेव संस्कारपरत्वे आमरस्यविकरलाभाय कालसंस्कार कत्वमिष्येत, तथापि विकृतौ तत्कालीनायामतिदेशे बाधकाभावात् । अन्यकालीनायामपि पशुपुरोडाशादिवत् ऊहेनातिदेशोपपत्तेर्न काचित् क्षति । अस्तु वा पर्वशब्दस्य पृणातेर्दानवाचित्वात् अधिकरणव्युत्पत्त्या कालवाचित्वत् भावव्युत्पत्त्या कर्मवाचित्वस्यापि संभवात् प्रकरणात्कर्मपरत्वमेव, तथापि पर्वशब्दवाच्यस्यापि आग्नेयादिसमुदायस्य निरूढत्वादपि देवतात्वसंभवादारादुपकारकयो अनयोरतिदेशे न किञ्चिद्बाधकम् । यदि तु संनिपत्योपकारकत्वलाभार्थं देवतासंस्कारकत्वमिष्येत, तथापि पर्वत्वस्य दानत्वपर्यायस्य प्रत्येकमाग्नेयादिवृत्तितया समुदायवृत्तित्वाभावात् अपूर्वसाधनत्वेन रूपेण आग्नेयादीनां प्रत्येकमेवोद्देश्यत्वात् गते हविरभिमर्शनमन्त्रवत् विकृतावतिदेशोपपत्ति । न च

तत्र शब्दत एव हविषामुद्देश्यत्वाभावेन उद्देश्यसाहित्यस्य चाविवक्षितत्वात् युक्तोऽतिदेशः। प्रकृते तु तद्धितशब्देन देवतात्वेन एतेषामुपादानात् साहित्यविवक्षोपपत्तेः। यद्यपि वैमृधन्यायेनोद्देश्यतावच्छेदकान्तरकल्पनया आग्नेयादीनां प्रत्येकमुद्देश्यत्वे उपादेयत्वाद्यभावः विवक्षितसाहित्यानामाग्नेयादीनामेव देवतात्वाभावात्, विकृतौ च तेषामनुपयोगित्वेन सम्प्रदानत्वानुपपत्तेर्देवतासंस्कारकयोः पार्वणहोमयोरनतिदेश इति वाच्यम्। उद्देश्यसामर्थ्यानुरोधेनाग्नेयादीनामपूर्वसाधनत्वेनैव रूपेण देवतात्वागमे विकृतावतिदेशोपपत्तेः। इतरथा स्वाहाकारपशुपुरोडाशादावपि अग्नीषोमत्वादिनैव देवतात्वापत्तेर्मौर्वे पत्नीयादौ तेषामतिदेशानापत्तिः। इदं च सर्वं तद्धितस्य देवताविधायकत्वमङ्गीकृत्योक्तम्। वस्तुतस्तु विशिष्टविधौ गौरवापत्तेः, इति समभिव्याहारमात्रेण च देवतात्वावगतिस्वाभिप्रायात् पर्वणि भवौ पर्वसम्बन्धिनौ च इत्येवमपि तद्धितोपपत्तेर्योग्यतायाऽपि तद्व्यवहारयोगात् नाय देवताप्रतिधि। मन्त्रवर्णादेव तु प्रमाणान्तराभावात् देवताप्राप्तिविधिः पार्वणपदं नामधेयमेव। अत एव याज्ञिकानां 'कामम यात्रिन पय पूर्णमास यजामहे' 'अमावास्या सुभगा सुशेवा' इतिमन्त्रगतपूर्णमासामावास्याशब्दयोरेव त्यागवेलायामुद्देशः, न तु पर्वशब्दस्य। एवं च तत्रत्यपूर्णमासामावास्याशब्दयो भाष्ये प्रयोगाभावात् मन्त्रार्थपर्यालोचनया कर्मपरत्वावगतेः एवैतस्य आग्नेयादिनिरूपसंस्कारकत्वेऽपि पूर्वोक्तरीत्या पशुपुरोडाशादिवत् सौर्यादावतिदेशो बाधकाभावात्। ननूद्देशाशस्य प्रयोजक त्वे पर्व्युक्तदेवतोपजीवित्वाभावे स्वरूपेण आग्नेयादेर्देवतात्वं सम्भवति। अतो येनैव अपूर्वसाधनविशेषरूपेण उद्देशांश प्रति संस्कार्यता, तेनैव रूपेण त्यागांश प्रति दैवतात्वमिति युक्त एव पशुपुरोडाशादेरिव पार्वणहोमयोरपि अतिदेशः। एवं वैमृधेऽपि येनैव रूपेण अपूर्वसाधनविशेषत्वादिना पौर्णमास्या उद्देश्यता, तेनैव रूपेण उत्तरकालप्रतियोगित्व स्वार्थत्वात्, न तु समुदितानेयत्वादिरूपेणेति उद्देश्यतावच्छेदककोटौ साहित्यरूपाग्नेयत्वादेश्च अविवक्षितत्वात् युक्त एव वैमृधस्यापि विकृत्यतिदेशः। अस्तु वा तत्रोद्देश्यतावच्छेदककोटौ साहित्याद्यविवक्षायामप्युत्तरकालप्रतियोगित्वे उपादेयत्वात् 'दर्शपूर्णमासाभ्यामिष्ट्वा' इतिवत् विवक्षा। अतश्च सोमे विकृत्युत्तरत्वप्रसङ्गस्य सौर्यादावपि पौर्णमास्युत्तरत्वाभावात् नातिदेशप्रसङ्गः। अन्वारम्भणीयाया तु साहित्यादेर्विवक्षा दर्शपूर्णमासत्वस्य उद्देश्यताऽवच्छेदककोटिप्रविष्टत्वाभावादिति युक्तस्तस्या अतिदेशः। प्रकृते पार्वणहोमयोस्तु आग्नेयत्वेन पर्व्युक्तदेवतोपजीवित्वात् स्वरूपेण आग्नेयादीनां देवतात्वानुपपत्तेर्युक्त एवातिदेशः।

यत्तु समुदायापूर्वप्रयुक्तत्वात् पार्वणहोमयोः, विकृतौ न सौर्यादौ तदभावादनतिदेश इति। तन्न, एवमपि वैश्वदेवादिपर्वणि तत्सत्त्वेन अतिदेशापत्तेः। प्रयाजादेरपि तत्प्रयुक्तत्वेन सौर्यादावनतिदेशापत्तेश्च। नहि प्रयाजादीनां प्रकृतौ परमापूर्वप्रयुक्तत्वम्, द्विःकरणानापत्तेः। अपितु समुदायापूर्वप्रयुक्तत्वमेव। अथ तस्य प्रयोजकता न समुदायापूर्वत्वेन, अपितु उत्पत्त्यपूर्वीयसहितापूर्वत्वेनेति तेषां सौर्यादावतिदेशः, ततः पार्वणहोमयोरपि तुल्यम्। इति प्राप्ते, उच्यते, तथापि येषामपि याज्ञिकानां विकृतौ पार्वणहोमाननुष्ठानात्, आचारस्यैव प्रकृतौ साहित्यस्य आग्नेयत्वादेश्चोद्देश्यतावच्छेदककोटौ विवक्षा, न तु व्रीहित्वादिवदविवक्षा इत्येतद्विधत्वस्यग्राहकत्वावसायात्, तत्र च विकृतौ अभावादनतिदेशः पार्वणहोमादीनाम्। अत एव न्यायेन तत्तद्विकृतिपर्युदासरूपेणानन्तश्रुतिकल्पना, गौरवापत्तेः। मूलाण्यन्यानि त्यमेव उररीकृत्य समुदायार्थतारूपहेतुपरतया व्याख्येयानि। १७.

मण्डन— 'पार्वणौ वैकृते न स्तः।' २५.

शंकर— 'पार्वणानतिदेशनम्।' २९.

* पार्वणस्थालीपाके लौकिकीलिङ्गेऽप्यता। भा. ७।४।२।२.

* पार्वणस्थालीपाकादीनि कर्माणि लौकिकानि। नेया निर्दिष्टमायतन श्रौतस्नोऽग्नि। न तानि आहवनीये प्रणयेत्। भा १२।४।१।१-३

१८ पार्वणहोमौ विकृतिषु न भवतः ॥

'पार्वणौ जुहोति' इति होम कालमीमांसा, इति प्राप्ते, कर्मामीमांसैव। तेन विकृतिषु पौर्णमास्यमावास्यासम्बन्धा

एकसमुदायाभावे न तत्संस्कारकहोमातिदेश इति नावमिकप्रयोजनम्। सङ्कर्ष २।२।३

पार्वणहोमयोरन्यतरस्यैव तत्तत्समुदायोपकारकस्य दर्शपूर्णमासयोरनुष्ठानम् ॥

उभयोरविशेषात् । ९।२।१९।५६ ॥

**भाष्यम्**— इदमिदानीं संदिह्यते। किमुभौ होमौ पौर्णमास्याममावास्यायां च, उत पौर्णमासीहोमः पौर्णमास्याम् अमावास्याहोमः अमावास्यायामिति। किं प्राप्तम्? उभावपि उभयत्र। कुतः? उभयोर्हि प्रकरणे उभावपि आम्नातौ। तस्मादुभयत्र भवितुमर्हत ।

यदभीज्या वा, तद्विषयौ । ५७ ॥

**भाष्यम्**— वाशब्दः पक्षं व्यावर्तयति। नैतदस्ति, उभयमुभयत्रेति। यदभीज्या, स तत्र भवेत्। तस्य हि स उपकारकः। अनुपकारक इतरस्य। न च अनुपकारकं कर्तव्यम्। समुदायप्रधानौ अत्र होमौ इत्युक्तम्। तस्मात् यदभीज्या, तद्विषयौ भवेतामिति।

**टुप्**— (अनन्तरम् 'उभयोरविशेषात्' इत्यादि सूत्रद्वयम्। तत् अधिकरणान्तरमिव [ इयशब्दो घातिक मनुसृत्य ] भाष्यकारेण व्याख्यातम्। तदाक्षिपति— ) 'उभौ होमौ पौर्णमास्याममावास्यायां च' इत्येतदयुक्तम् (अधिकरणान्तरत्वं पूर्वपक्षाभावात्। तदाह— ) यदा समुदायस्य संस्कारकौ होमौ अवगतौ, तदा यः पौर्णमासीलिङ्गः (मन्त्रः), स पौर्णमासीमेव प्राप्नोति, इतरोऽपि (अमावास्यालिङ्गः), सोऽपि तामेव (अमावास्यामेव प्राप्नोति) इति नास्त्यनियमः (अनियमप्रसङ्गः। अथ स्वमतेनाह ) तस्मादन्यथा वर्ण्यते। (पार्वणन्यायाधिकरणस्य ९।२।१८) प्रयोजनसूत्रे एते। यदि पर्वशब्दः कालवचनः, तथा सति कालस्य असंस्कार्यत्वात् आरादुपकारकौ स्याताम्। कथम्? यद्यपि कालस्य कर्माङ्गता अवगम्यते तथापि सकृदेव (आदौ स्मृत्वा) चोदिते (काले) कर्म प्रस्तूयते। न तस्य भूयोभूयः स्मृत्या प्रयोजनम् (येन कर्ममध्ये स्मर्येत)। यथा अन्यान्यङ्गानि भूयोभूयः स्मरणमपेक्षन्ते, नैव कालः। तस्मात् कालवचने पर्वशब्दे (सति) अदृष्टार्थौ होमौ प्राप्नुतः। अत आह (भाष्यकारः पूर्वाधिकरणे) 'कालमीज्याया विकृतिषु प्रवृत्तिः' इति। ('वैकृतेषु' इति स्खलपाठः। वस्तुतस्तु एतादृशी पङ्क्तिः भाष्ये नोपलभ्यते। तत्र शाबरभाष्ये 'कालामीज्याया तयोः प्रवृत्तिः' इति ५१ सूत्रे सिद्धान्तभाष्यान्ते च 'वैकृतेषु अप्रवृत्तिः' इति)। न च प्रकरणादुत्कृष्य कालस्य संस्कारकौ कल्प्येते, फलकल्पनाभयात्। तस्मात् यदि कालवचनः पर्वशब्दः (पूर्वपक्षे), तथा सति (आरादुपकारकौ स्याताम्) आरादुपकारकत्वात् न लिङ्गं व्यवस्थां करोति। अत आह (सूत्रकारः—) उभयोः (पर्वणोः पूर्वपक्षे स्याताम्) अविशेषात् इति। (सिद्धान्ते तु—) समुदायवाचकत्वेन तस्य (समुदायस्य) संस्कार्यत्वात् भवति व्यवस्थाकरणे लिङ्गम्। अत आह— 'यदभीज्या वा तद्विषयौ' इति।

**सोम**— पूर्वोक्तार्थ एव विशेषविचारात् सङ्गतिः। कालाभीज्यापक्षे उभयोः पर्वणोः उभावपि होमौ स्याताम्, आरादुपकारकत्वेन लिङ्गेन विशेषाभिद्वं इति 'उभयोरविशेषात्' इति सूत्रं पूर्वाधिकरणपूर्वपक्षप्रयोजनकथनपरम्। 'यदभीज्या वा तद्विषयौ' इति सूत्रं च यस्य समुदायस्य यत्र संस्कार्यत्वसम्भवः, तद्विषयौ होमस्तत्र इति संस्कार्यत्वात् व्यवस्था इति सिद्धान्तप्रयोजनकथनपरम्।

**वि**— 'सर्वार्थौ सर्वयोर्होमौ न वा, प्रकरणादुभौ। सङ्कीर्णौ, दुपकार्यस्य भेदादेतौ व्यवस्थितौ ॥'

**भाट्ट**— स्वरयशास्त्रभेदावगते एकवाक्योपात्तकर्मद्वयस्यापि सन्निधानात् अवान्तरप्रकरणाद्वा एवैकम् न प्रति शेषित्वावगते कर्मद्वयस्यापि पूर्णमासदेवताकतया तत्संस्कारकत्वम्, अमावास्यादेवताकतया चामावास्यासंस्कारकत्वम्। प्रधानद्वयानुरोधेनैव मन्त्रद्वयस्यापि तत्तत्राप्रवृत्तिः। एकपदोपादानावगतकर्मद्वयसाहित्यवत्त्वाच्च सकृत्स्मृतस्यापि पुनः स्मरणम्, ता चतुर्भिः' इतिवचनानुपपन्नम्। नहि अत्र यथारम्भ पाठः येनैकस्य कर्मणः एक एव मन्त्रो भवेत्। एकपदोपादानात्तु उभयोरपि उभयाङ्गत्वम्। अत एव नात्र सूत्रवाक्यविभागः। इति प्राप्ते, समसंख्याङ्गप्रधानविषये यथाक्रममेव सम्बन्ध इति न्यायस्यौत्सर्गिकत्वात् एकस्य प्रधानस्यैकेनैव मन्त्रेण निराकाङ्क्षत्वाच्च, अश्रुतसाधारण्यावृत्तिकल्पने पुनः स्मारकाकाङ्क्षाकल्पने च

प्रमाणाभावात् एकस्य एकसंस्कारार्थत्वमेवेति प्रयोजन-वशाद्विभागः । १८.

मण्डन— 'पर्वणोस्तौ व्यवस्थितौ ।' २६.

शंकर— 'व्यवस्थोक्ता पार्वणयोः ।' ३०.

● 'पार्वणहोमयोस्त्वप्रवृत्तिः' इति विशेषातिदेशापवादः फलनियमकर्तृसमुदायवत् अष्टमे एव वक्तव्योऽपि कथञ्चित् प्रसङ्गात् नवमे उक्तः । प्रमेयं तु आष्टमिकमिति इहैव तत्र किञ्चित् विन्यस्यते । 'स्रुवेण पार्वणौ जुहोति' इति तत्स्थया मन्त्रभेदात् द्वौ पर्वदेवत्यौ होमौ विधीयेते । तत्र पर्वशब्दः पृणातेर्दानकर्मणो निष्पन्नः कर्मवचनः । तेन कर्मैव देवता । सा च स्वर्गार्थत्वेन सत्यार्था । तत्र यदि एकैको होमः यद्कर्मदेवत्यः स्यात् ततः अक्रियमाणकर्मांशो अदृष्टार्थता आपद्येत । तत्परिहाराय एकः पौर्णमासीदेवत्यः अपरः अमावास्यादेवत्य इति कल्प्यते । तेन प्रकरणविशेषेऽपि सूक्तवाकन्यायेन संस्कार्यवशात् व्यवस्था । सौर्यादौ च संस्कार्यस्य समुदायस्याभावात् नातिदेशः इत्यधिकरणार्थः । बाल. पृ. १२१-१२२.

§ पार्वणहोमयोस्त्वप्रवृत्तिः समुदायार्थसंयोगात् तदभीज्या हि । ९।२।१८।५० ॥

दर्शपूर्णमासयोः समामनन्ति 'स्रुवेण पार्वणौ जुहोति' इति । एतौ पार्वणहोमौ सौर्यादिषु विकृतिषु स्यातां न वेति विचारः, पार्वणहोमौ कालाभीज्या समुदायाभीज्या वा इति च विचारः । कालं अभिलक्ष्य इज्या यागः कालाभीज्या । समुदायं पौर्णमासत्रयात्मकं अमावास्यायागत्रयं चाभिलक्ष्य इज्या समुदायाभीज्या । तत्र सिद्धान्तमाह । पार्वणहोमयोः 'ऋषभं वाजिनं वयम्' इति मन्त्रेण पौर्णमासे स्रुवेण आज्यहोमः 'अमावास्या सुभगा सुशेवा' इति मन्त्रेण अमावास्यायागे स्रुवेण आज्यहोम इतीमौ पार्वणहोमौ नाम । तयोः सौर्यादौ विकृतौ अप्रवृत्तिः प्रवृत्तिर्न स्यात् । समुदायार्थसंयोगात् पौर्णमासत्रिकेण दार्शिकत्रिकेण च समुदायरूपेण अर्थेन पार्वणहोमयोः संयोगात् सम्बन्धात् । हि यस्मात् पार्वणहोमौ तदभीज्या न समुदायं अभिलक्ष्य इज्या यागः । तस्मात् विकृतौ पार्वणहोमयोर्नातिदेशः इति सिद्धान्तः ।

कालस्येति चेत् । ५१ ॥

पार्वणहोमयोः समुदायाभीज्यत्वात् सौर्यादौ विकृतौ नातिदेश इति सिद्धान्ते उक्ते पूर्वपक्षी आह । कालस्य पर्वशब्दो वाचकः, इति कालाभीज्या पार्वणहोमौ । तस्मात् पर्वकाले क्रियमाणे सौर्यादौ तयोरतिदेशः स्यात् । इति चेत् ।

नाप्रकरणत्वात् । ५२ ॥

पूर्वपक्षशङ्कां निषेधति सिद्धान्ती । नेमौ कालाभीज्या । कालस्य अप्रकरणत्वात् प्रकरणेन समुदायवाची पर्वशब्दो गृह्यते न कालवाची । अपि च पृणातेः पर्वशब्दोऽयम् । पृणातिश्च दाने प्रसिद्धः । दानानि च समुदायौ । तस्मात् समुदायाभीज्या पार्वणौ होमौ । तस्मात् वैकृतेषु पार्वणयोरप्रवृत्तिः ।

मन्त्रवर्णाच्च । ५३ ॥

'ऋषभं वाजिनं वयं पूर्णमासं यजामहे' 'अमावास्या सुभगा सुशेवा' इति मन्त्रवर्णात् पूर्णमासामावास्याशब्दाभ्यां यजिसमानाधिकरणाभ्यां पार्वणहोमयोः समुदायाभीज्यत्वावगमः । न तयोः कालाभीज्यता ।

तदभावेऽपीति चेत् । ५४ ॥

पूर्वपक्षी आह । तदभावे सौर्यादौ तस्य आग्नेयादिसमुदायस्य अभावेऽपि सौर्यादौ असन्निहितयोरपि पार्वणहोमयोः अनुष्ठानं स्यात् । अग्निवत् यथा 'अग्निमग्न आवह' इत्यावाहननिगदे असन्निहितोऽप्यग्निः आवाह्यते । एवमिहापि असंनिहितयोरप्यनुष्ठानम् । इति चेत् ।

नाधिकारिकत्वात् । ५५ ॥

पूर्वपक्षिणा उक्तं निषेधति सिद्धान्ती । न असंनिहितयोः अनुष्ठानम् । आधिकारिकत्वात् अधिकारे भवत्वात् पार्वणयोः । आग्नेयाद्यधिकारे हि तौ पठितौ । तस्मात् सौर्यादौ विकृतौ पार्वणहोमयोर्न प्रवृत्तिः इति सिद्धान्तः । के.

● पार्वणहोमयोः स्वाहाकारस्यार्थवत्त्वं प्रकृतानेन । भा. ८।४।५।१५.

● **पार्वणहोममन्त्रौ** । 'ऋषभं वाजिनं वयम् । पूर्णमासं यजामहे । स नो दोहतां सुवीर्यम् । रायस्पोषं

सहस्रिणम् । प्राणाय सुराधसे । पूर्णमासाय स्वाहा ॥' (तैब्रा. ३।७।५।१३) इति पूर्णमासे । 'अमावास्या सुभगा सुशेवा । धेनुरिव भूय आप्यायमाना । सा नो दोहतां सुवीर्यम् । रायस्पोषं सहस्रिणम् । अपानाय सुराधसे । अमावास्यायै स्वाहा ॥' १४ । इत्यमावास्यायाम् । अत्र प्रथमवाक्यद्वयेन एकमर्धर्चं कृत्वा अनन्तरवाक्यत्रयेण उत्तरार्धर्चं कृत्वा होमकाले मन्त्रौ प्रयोक्तव्यौ । प्रतिमन्त्रं च होमार्थमेव स्वाहान्तं वाक्यं ब्राह्मणेनैव मयोक्तम् । मन्त्रौ तु पङ्क्तिच्छन्दस्कौ पञ्चपदावेव । के.

• पार्ष्णिकबोधः यादृशोपपदद्वयममि याहारे आगोपालाङ्गनं तदर्थयो यादृशोऽन्वयोऽवगम्यते तादृशस्यैव तदर्थयो अन्यान्वयानुपपत्तौ पार्ष्णिकबोधविषयत्वम् । अत एव अरुणैकहायनीपक्षे परिच्छेद्यपरिच्छेदकभाव एव पार्ष्णिकबोधविषयः । भाट्ट. १०।८।२.

• विशिष्टकर्मविधित्वेऽपि विशेषणानां पार्ष्णिकसम्बन्धावगमः । सहकारितामात्रेण च पार्ष्णिकसम्बन्धायोगः । कौ २।४।२।१०.

■ पार्ष्णिकान्वयन्यायः । (अरुणाधिकरणोक्तोऽयम्) । नयमस्तरणाभ्यां स्तोत्राङ्गत्वेनावगताभ्यामृचा अभिव्यक्तिं कुर्वत् साम तद्द्वारा स्तुतिं निर्वर्तयितुं शक्तमिति श्रुतस्तुत्यर्थत्वनिर्वाहकानुष्ठानविशेषणभाव पार्ष्णिकान्वयेन स्तुत्यर्थासु ऋक्षु अवतरति । रसायनम्. पृ. ६९

• 'पालाशं ब्रह्मवर्चसकामस्य' यूपं कुर्यात् इति फलविधिः । भा ४।३।११, • 'पालाशे बध्नाति' 'खादिरे बध्नाति' 'रौहितके बध्नाति' । एकार्थाः सन्तो विकल्प्यन्ते खादिरादयः । २।२।६।१७.

• 'पावकाग्निन्यायेनात्र वच्यौ सगुणाविमौ' (अग्नीषोमौ) । वि १०।४।१९.

■ पावकाग्निन्यायः । विकृतौ देवतानिर्गुणवाचिपदस्यापि त्यागादौ प्रयोगः ॥

प्राकृतस्य गुणश्रुतौ सगुणेनाभिधानं स्यात् । १०।४।१४।२६ ॥

भाष्यम् — अस्त्याधानम् 'य एवं विद्वानग्निमाधत्ते' इति । तत्र पवमानहवींषि श्रूयन्ते 'अग्नये पवमानायाष्टाकपालं निर्वपेत्, अग्नये पावकाय, अग्नये शुचये' इति । तत्र सन्देहः क्रियते किं सगुणं अग्नेरभिधानं कर्तव्यम्, उत निर्गुणमिति । किं प्राप्तम्? प्राकृतस्य निर्गुणस्य सगुणेनाभिधानं कर्तव्यमिति ।

अविकारो वाऽर्थशब्दानपायात्स्याद् द्रव्यवत् । २७ ॥

भाष्यम्— अविकारो वा स्यात् निर्गुणमभिधानम् । कुतः? अर्थशब्दानपायात् । एवं शब्दः अर्थश्च अनपेतौ भवति । य एवासावग्निः, स एव पवमानः पावकः शुचिश्च । या देवता निर्देष्टव्या, सा निर्दिष्टैव भवति असत्यपि गुणवचने । द्रव्यवत् । यथा 'सा वा एषा सर्वदेवत्या यदजा वशा, वायव्यामालभेत भूतिकाम' इति । अजावशाशब्देन चोदिते कर्मणि छागशब्देन काचित् निगमा भवन्ति । अर्थः शब्दः अनपेत इति कृत्वा । एवमिहापि द्रष्टव्यम् । तस्मात् निर्गुणेनाभिधानं कर्तव्यमिति ।

आरम्भासमवायाद्वा चोदितेनाभिधानं स्यादर्थस्य श्रुतिसमवायित्वादवचने च गुणशासनमनर्थकं स्यात् । २८ ॥

भाष्यम्— अथवा चोदितेन सगुणेनाभिधीयेत । कुतः? आरम्भासमवायात् । नहि आरम्भेण देवता कर्मणि समवैति । न स्वेन रूपेण देवतायाः कर्मणि साधनभाव इत्युक्तम् । यदि हि रूपेण समवेयात् तथा सति अग्निशब्देन पवमानोऽपि प्रत्याय्यते इति गुणाभिधानं न क्रियेत । कथं तर्हि साधनभावः? श्रुतिसमवायित्वात् देवतार्थस्य । देवताशब्दस्य च हविषश्च सम्बन्धः साक्षादुच्यते । यस्य शब्दस्य सम्बन्धः स शब्दो वदितव्यः । एवमसौ सम्बन्धः कृतो भवति । यदि च गुणाभिधानं न क्रियते गुणशासनमनर्थकं स्यात् । एवमर्थं हि तत्र शब्द उच्चार्यते, कथमसौ कर्मणि सम्बध्येतेति । [illegible] यदि गुणो न सम्बध्येत गुणवचनवैयर्थ्यं स्यात् । तस्मात् सगुणेनाभिधानं कर्तव्यमिति ।

**चोदना वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थत्वात् तस्य तस्योपदिश्येत ॥ ६ ॥**

भाष्यम्— कर्मचोदना वा आग्नेयादयः स्युः। कुतः? गुणानां युगपच्छास्त्रात्। एकेनैव वाक्येनानेको गुणो विधातुमिष्यते भवता। न च शब्दान्तरेण चोदिते कर्मणि अनेको गुणः परस्परसम्बन्धे च्चामति शक्यते विधातुम्। कथम्? यदि तावत् 'पौर्णमास्यामष्टाकपालो भवति' इति संबन्धो विवक्षितः, न तदा अयमर्थः अष्टाकपालः तस्या अभिसंबध्यते इति। कर्हि? अष्टाकपालः पौर्णमास्या अभिसंबध्यते इति। तत्र तदा भेदविवर्तने। तदानीं 'आग्नेयः' इत्ययं अस्यान्तिकादपि उपनिपतितः भवतिसंबन्धाभावात् नानेन संबन्धुमर्हति 'अष्टाकपाल आग्नेयो भवति' इति। अथ 'आग्नेयः पौर्णमास्यां भवति' इति विवक्ष्यते, तदा आग्नेयपुरोडाशयोः असंबन्ध एव स्यात्। अथ पौर्णमास्यामष्टाकपालस्य आग्नेयता विधीयते, वक्तव्य येन तस्यामष्टाकपालो विहितः इति। अथ तस्यामाग्नेयस्याष्टाकपालता, तथाप्येष दोषः। अथ पौर्णमासीन्युभाभ्यां संबध्यते, परस्परेण द्रव्यदेवतयोरसंबन्ध एव स्यात्। अथ द्रव्यदेवते परस्परेण विशिष्टे सत्यौ पौर्णमास्या संबध्येयाताम् इत्युच्यते आग्नेयोऽष्टाकपालो यः स पौर्णमास्यां भवतीति। तस्य अप्रसिद्धत्वात् एतदप्ययुक्तम्। अथ येन विदग्धेन सङ्कल्पितः पौर्णमास्यां विधीयते, तथापि देवताया अविधानात् रूपाभावः एव। अथाग्निर्देवता भविष्यतीति कश्चिद् ब्रूयात् ▮ वक्तव्यो मिथश्चानर्थसंबन्ध इति, नहि आग्नेयशब्दोऽनुवादो विधिश्च भवतीति। कल्पयिष्यामो देवतामिति चेत्। असति विधाने देवताया अभावात्। सन्निधिशब्दोऽयं देवतेति। स एवाग्निरष्टाकपालस्य देवता, नान्यस्य। तस्मादवश्यमाग्नेयाष्टाकपालसंबन्धो विधातव्यः, स एव यागो भवतीति। तेन पौर्णमासीयागस्यापरो यागः संबन्धी विधीयते, न द्रव्यं देवता वा। न च यागस्य यागान्तरं रूपं भवति। अतो रूपावचनात् पौर्णमास्यमावास्यासंयुक्तौ नापूर्वयोः कर्मणोर्विधातारौ। यत्तूक्तं पौर्णमास्यमावास्याशब्दौ लक्षणया प्रकृतान् यागाननुवदितुं शक्नुतो नाप्रत्ययेनेति। नैष दोषः। यदा आञ्जस्येन शब्दार्थो नावकल्पते, तदा लक्षणयाऽपि कल्प्यमानः साधुर्भवति। यथा अग्नौ तिष्ठति अवटे तिष्ठति, अग्निसमीपे अवटसमीपे तिष्ठतीति भवति संव्यवहारः। लक्षणाऽपि हि लौकिक्येवेति।

वा— नैते अष्टाकपालादयो गुणविधयः। कुतः? '**प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः। अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥**' कर्मोत्पत्तिवाक्ये हि प्रत्ययो भावनाप्रधानत्वात् विधातुमुपक्रमते। सा च (भावना) यावत् धात्वर्थकारकैर्न परिपूर्यते, तावत् अनुष्ठातुमयोग्या इति न विधिव्यापारावसानम्। तत्र भावना आत्मांशभूतप्रत्ययगतकारकसामान्यान्यथानुपपत्त्या आश्रितविशेषोपलिप्सया स्ववाक्योच्चारितकारकविभक्त्यन्तपदवर्तिभिर्विशेषैः भावनामात्राकाङ्क्षिभिः शक्यैरेव विशेष्यते। प्रतिपदं च यावत्किञ्चिद् द्रव्याश्रितं जातिलिङ्गसंख्यादि, तत् सर्वं एकपदोपादानलक्षणश्रुतिप्रविलम्भविशेषणविशेष्यभावं अप्रतिपन्नपरस्परशेषशेषित्वं विभक्तिश्रुत्यैव कारकात्मना भावनाशेषत्वं प्रतिपद्यते। एवं यावन्ति पदानि संनिकर्षविप्रकर्षस्थानि, तानि सर्वाणि अनुषङ्गाधिकरणोक्तेन मार्गेण अनादृत्य संनिकर्षविप्रकर्षौ युगपद् संनिपतन्ति। ततः सर्वविशेषणविशिष्टा अनुष्ठानयोग्या भावनामाश्रित्य विधिः समाप्यते। स च एकेनैव प्रयत्नेन तां विशिष्टां विदधाति इति नानेकवाक्यकल्पनाऽऽपत्तिदोषः। तथाहि, '**श्रौतव्यापारनानात्वे शब्दानामतिगौरवम्। एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यते ॥**' विशिष्टाया भावनायामाश्रय श्रौतं विधित्वं यदि अन्यत्रापि श्रुत्यैव पुनर्व्याप्रियेत, ततः पुनरुच्चारणदोषं अवैदिकत्वापत्त्या लभेत। अथ पुनः सकृत् विधाय निवृत्तव्यापारः स्वार्थान्यथाऽनुपपत्त्या सर्वविशेषणेषु प्रत्येकनिष्ठानि विध्यन्तराणि आविर्भावयन् समाम्नायावगतैकरूपापरित्यागेनैव असकृदुच्चारणफले वर्तते। '**विशेषणविधिश्चायं पश्चाद्यद्यपि गम्यते। तथापि त्वाकृतिन्यायात् ततः प्रागेव जायते ॥**' विशिष्टनिमित्तत्वात् अर्थापत्तिः पश्चात् भवन्ती यद्यपि विशेषणविधीन् उत्तरकालमवगमयति, तथापि ▮ आकृत्यधिकरणन्यायेन विशेषणानि अनु-

पादाय विशिष्टव्यापारासम्भवात् नूनं पूर्वतरं विशेषणविधयो निष्पन्नाः, यतः तदधीनसिद्धिः विशिष्टप्रत्ययो दृश्यते इति। तेन बहव एवैते विधयः इति प्रथमसाध्योपच्छिन्नाः युगपत् क्रमेण वा व्याप्रियन्ते इति अनेकविध्यन्तरप्रसङ्ग समर्थैर्व्यधिशिष्टविधिप्रवादेन अनेकगुणविधान अपूर्वभावनाविविपक्षे सुलभम्, नेतरत्र। कथम्? 'प्रधानं नीयमानं हि तत्राङ्गान्यपकर्षति। अङ्गमाकृष्यमाणं तु नाङ्गान्तरमसंगतेः॥' यदा हि भावना अन्यतः प्राप्ता भवति, तदा तस्याः पिष्टपेषणवत् प्रति हतशक्तिर्विधायकः तामविदधानो न तत्सगतानेकविधिव्यापारप्रसङ्गहेतुत्व प्रतिपद्यते। विशिष्टविधाने हि अर्थापत्त्या विध्यन्तराणि कल्प्यन्ते, न चात्र तत् सम्भवति, इति अनुपयुक्तश्रौतव्यापारप्रसङ्ग एव फलत 'आनर्थक्यात् तदङ्गेषु' इत्यनेन न्यायेन भावनातः प्रकृतीयं तत्सम्बद्धानि कारकाणि उपकर्षति। तत्र यावन्ति एकपदोपात्तैककारकविशेषणानि जातिलिङ्गद्रव्यसंख्याऽऽदीनि, तानि विशिष्टभावनाविधिन्यायेनैव तत्कारकाक्षेपात् सर्वाणि विधीयन्ते इति प्राप्तायामपि भावनाया अनेकार्थविध्युपपत्तिः। यदा तु अनेकपदोपात्तानेककारकोपनिपातो भवति, तदा कारकाणां परस्परसंबन्धाभावात् तत्पदेष्वपि असबध्यमानेषु यदि एकत्र विधिर्गच्छति, तदा नेतरत्र गतो भवति, एवमितरगमनेऽपि अन्यगमनानुपपत्तिः, असम्भवात्। एवं च न भावनावत् एकेन विहितेन इतरत् अर्थादाक्षेप्तुं शक्यते। तत्र अर्थलभ्यविध्यन्तरप्रसक्तौ असत्या एकात्मकः श्रौतो विधिः एकत्रोपक्षीयमाणो यद्यपि अन्यत्रापि अस्तीति कल्प्यते, तत् नासकृदुच्चारणादृते सिध्यति इति पौरुषेयः अनेकोच्चारणप्रसङ्गः। तद्दर्शयति (सूत्रकारः) चोदिते हि प्राप्ते कर्मणि तदर्थत्वात् गुणार्थत्वात् तस्यतस्य गुणस्य विधेये पुनःपुनः उपदिश्येत उच्चार्येत, प्रत्ययः इत्यर्थः। 'परस्परसम्बन्धे चाशक्ति' इति भाष्यं अर्थापत्तिमूलोच्छेदप्रदर्शनार्थम्। लोकेऽपि च यत् प्रधानं राजप्रभृति क्वचिन्नीयते, तत् आत्मना अविनाभूतानि अमात्यादीनि अङ्गान्यपि अनोपानि आक्षिपति। यदा तु कश्चित् भृत्यानां क्वचित् गच्छति, तदा तदसम्बन्धीनि भृत्यान्तराणि पदमपि न चलन्ति, तत्रावश्यं प्रयत्नान्तरमास्थेयम्। न च तत् एकव्यापारसाध्यमिति अशक्यं सकृत् श्रुतो उपादातुमिति। एतमेवार्थं प्रपञ्चयति (भाष्यकारः)। यदि हि पौर्णमास्युद्देशेन अष्टाकपालो विधीयते, तदा तत्स्वरूपोत्पत्तिरपि तावदनुक्ता सती क्लेशेन लभ्या किमुत पदार्थान्तरविधानम्। तदाह (भाष्यम्) मत्वतिसम्बन्धाभावात् नानेन शक्यते। अयमाग्नेयः पौर्णमास्यामित्यनापि स्वरूपोत्पत्तिक्लेशः पूर्वोक्त एव द्रष्टव्यः इति तत्प्रदर्शयैव अष्टाकपालसम्बन्धाभावः प्रदर्शितः।

एवं पौर्णमासीविशिष्टान्यतरानुवादेऽपि अनूद्यमानस्योत्पत्तिः, पौर्णमासीसम्बन्धः, विधीयमानस्याप्युत्पत्तिः, इतरेतरसम्बन्धश्च, इति अतिगौरवम्। पौर्णमासीपदत्वन्त्वेऽपि उभयोरुत्पत्तिः कर्तव्या, परस्पर सम्बन्धश्च इति दोषौ। न च अरुणैकहायनीवत् परस्परनियमसिद्धिः, विशिष्टविधानदोषात्। अतः अष्टाकपालानुरक्तया पौर्णमास्या आग्नेयः सम्बध्यते, तदननुरक्तया वा (आग्नेयाननुरक्तया पौर्णमास्या वा इत्यर्थः) अष्टाकपालः इत्यसंबन्धः। एतत्परिहारार्थं परस्परसम्बन्धं द्रव्यदेवतयोः प्रथममेव कुर्वन् उभयस्वरूपोत्पत्तिः, अन्यतरस्य च अन्यतरत्र विधानम्, इति युगपद्विधीयमानपरस्परसम्बन्धक्लेशमनुभूय पुनः पौर्णमासीसम्बन्धक्लेशः। तत्परिहारार्थं अन्यतः सिद्धं देवतासम्बन्धमनूद्य केवलकर्मसम्बन्धं दर्शयति– 'अथ केन विदध्ये सङ्कल्पितः' इति। ■■ सङ्कल्पितशब्दवशेन केचिदाहुः 'केनचिदनुज्ञाता संकल्पित' इति। न ■ एतत् युक्तमिव 'अन्येन अर्थकर्मणि उदीयस्य हविषो हरणम्' इति। तस्मात् हि गिजन्तः सङ्कल्पितशब्दः केन चित् वाक्येन ('आग्नेयमष्टाकपालं निर्वपेत् स्वर्गकामः' इत्यनेन) स्वर्गकामादियुक्तेन विहितः इत्यर्थः। तदाह अष्टाकपालसम्बन्धसिद्ध्यर्थं आग्नेयशब्दे अनूद्यमाने पौर्णमासीगतस्य का देवता इति न ज्ञायते। युगपद्गुणद्वयविधिविवक्षने वाक्यभेद इति। अनेनैव मार्गेण व्याकृत्याधिकरणमुपप्रदर्शितैः वचनव्यक्तिप्रकारैः वाक्यभेदानन्त्य प्रपञ्चयितव्यम्। तेन अनन्यविधातयोऽत्र द्रव्यदेवतासम्बन्धः। न च स पूर्वप्राप्ते कर्मणि सम्भवति, इति 'गुणश्चापूर्वसंयोगे' इति कर्मान्तरत्वम्। कर्मान्तरत्वे

न्च सति तदवस्थं रूपावचनं तदनुवादता । अतश्च बलात् एकवचनत्वमादि आश्रयणीयम् । किञ्च 'न चाऽन्यक्रियायोगे वाक्यमेतत् समाप्यते । न च स्वार्थासमाप्तत्वाद्वाक्यान्तरमपेक्षते ॥' अष्टाकपालो भवति इति नाय पुरुषव्यापारः । न च पुरोडाशव्यापारमात्रं विधातुं शक्यम्, अभावनाविशेषात्मकत्वात् । तेन अवश्यकल्पनीये पुरुषव्यापारविशेषे यागकल्पना आपतति । तत्र यद्यपि प्रत्यक्षे लभ्यमाने न युक्तं आनुमानिककल्पनम्, तथापि अत्र अपरिपूर्णे वाक्ये वाक्यान्तरानपेक्षिणि पौर्णमास्यमावास्यावाक्ययोः यजिः असन्निहित एवेति नानुमानं प्रतिबध्नाति । अनुमिते च सति 'य एवं विद्वान्' इति अनुवादस्वरूपत्वात् अनुवाद एव विज्ञायते । क्रियासामानाधिकरण्याच्च 'यदाग्नेयोऽष्टाकपालः' इत्यादेर्वाक्याद् विलक्षणः कर्तृसमानाधिकरणोऽयम् 'य एवं विद्वान्' इत्युपनीयमानो विधिसामर्थ्यं निरुन्ध्यात् । तथा चोक्तं 'क्रियापदैक्ययोगित्वे यच्छब्दो न त्यजेद् विधिम् । कर्तृयुक्तः स एवान्यप्रापितार्थानुवादकृत् ॥'

व्यपदेशश्च तद्वत् । ७ ॥

भाष्यम्— 'इमानि ह वा एतानि हवींषि अमावास्याया मभिवन्ते, आग्नेय प्रथममैन्द्रे उत्तरे' इति समुदायं दर्शयति । आग्नेयादीनां गुणत्वे विकल्पः स्यात् । तत्र आग्नेयं प्रथमम्, ऐन्द्रे उत्तरे द्वे इति व्यपदेशो नावकल्पेत । विकल्पे पूर्वापरत्वासंभवात् पौर्वापर्यं नोपपद्यते इति ।

वा— 'एषेष्टिर्यदमावास्या सांनाय्यौषधयोस्तथ । विकल्पे सति संभाव्यं पौर्वापर्यं कुतो भवेत् ॥' कर्मभेदे हि मिथश्रिणश्चान् सानाय्यपुरोडाशादपुनये एते भिषन्ते इति समस्तसमत्वं प्रथमोक्ताभिधानं यावकल्पते नान्यथा, प्रथमपक्षे च चतुर्थमपि अवरमन्यस्मुत्तरमीति स्यात् नोत्तरे इति ।

लिङ्गदर्शनाच्च । ८ ॥

भाष्यम्— लिङ्गं च दृश्यते, 'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते, त्रयोदशामावास्यायाम्' इति ।

वा— कर्मान्तरपक्षे अनतिदेशाद् गुणविधित्वे सूत्राद् कर्मैकत्वचतुर्दशत्वानुवादविरोधः । कुतः ?

'पौर्णमास्यां यदा तिस्रो द्वे दर्शविषये यदा । प्रधानाहुतयः सन्ति तदा संख्योपपद्यते ॥' तस्मात् समुदायानुवादो इति सिद्धम् । आह च— 'अरूपत्वाद्विधेयस्य प्रकृते शब्दशक्तितः । तत्रैव रूपलाभाय समुदायानुवादता ॥'

शा— इति प्राप्ते, अभिधीयते । 'कर्मान्तरविधायित्वे स्यात् सर्वेषां प्रधानता । समुदायानुवादौ तु रूपाभावादिमौ मतौ ॥ द्रव्यं कथञ्चिल्लभ्येत देवता तु न लभ्यते । लभ्यते मन्त्रवर्णाभ्यामाज्यभागाङ्गता यतः ॥ लिङ्गक्रमाभ्यां मन्त्राणामाज्यभागाङ्गता स्थिता । वचनं तु व्यवस्थाऽर्थमन्यार्थत्वाद् बाधकः ॥' इदानीं पूर्वपक्षवादी प्रकारान्तरेण प्रत्यवतिष्ठते 'भवेदेवमरूपत्वे समुदायानुवादता । यदा प्रेयादिवाक्यैस्तु तयो रूपं विधीयते ॥ अत्रोच्यते गुणोऽनेकः प्राप्तकर्मानुवादतः । नैकेन विधिना शक्यो विधातुमसकृच्छ्रुतेः ॥' ततः समुदायानुवादी ।

के— अपवादः संगतिः ।

सोम— सूत्रार्थस्तु—पौर्णमास्या पौर्णमास्युपलक्षितविद्वद्वाक्यद्वये प्राप्तं प्रकृतमेव कर्मगतं स्यात्, कर्मान्तरविधौ रूपप्रापकवचनाभावात्' इति ।

वि— 'य एवं विद्वान् पौर्णमासीममावास्यामितीरितम् । कर्मान्यदुत पूर्वोक्तसमुदायानुवादकम् ॥, कर्मान्तरं स्यादभ्यासाद् औरं द्रव्य हि देवता । शक्यस्वादितो लभ्याऽनुवादस्तु न युज्यते ॥, धार्म्यन्यमागाद्भवतीनैर्न देवता । पौर्णन्यन्तते पौर्णमासी युक्तं त्रिर्यं तथा ॥ अग्नेयादि समूहस्य द्वित्वसिद्धिः प्रयोजनम् । सहस्थितिः पौर्णमास्यामित्युक्तिभ्यां त्रिके त्रिके ॥ विद्वद्वाक्यविधौ विध्यानुविधानप्रेक्षकारिता । विहितस्य फलित्वेन प्राधान्यमितरे गुणाः ॥' (एतदर्थस्तु, 'य एवं विद्वान् पौर्णमासीम्' 'य एवं विद्वानमावास्याम्' इति वाक्यद्वयमीरितम् । धार्मन्यादितः 'धार्मन्ती पौर्णमास्या मनूच्येते, वृधन्वती अमावास्यायाम्' इति मन्त्राभ्यां देवता लभ्या । अनुवादस्तु न युज्यते विधिसन्देहस्य

फलस्य विद्दर्शनात् । पौर्णमास्युते 'पौर्णमास्या पौर्णमास्या यजेत' इत्यनेन त्रिकमनूद्यते । अमेत्यपि 'अमावास्यायाममावास्यया यजेत' इत्यनेनापि अमावास्यायुक्तं त्रिकमनूद्यते । अनुवादस्य प्रयोजनं तु समूहस्य द्वित्वसिद्धिः । 'पौर्णमास्यां पौर्णमास्या, अमावास्यायाममावास्यया' इत्युक्तिभ्यां तु त्रिकेत्रिके सहस्थितिः सहानुष्ठानं सिध्यति । विद्वद्वाक्ययोः विधौ स्वीकृते तु आग्नेयादिना 'आग्नेयोऽष्टाकपालोऽमावास्यायां पौर्णमास्यां चाच्युतो भवति' इत्यादिना वाक्येनैव विहितत्वात् विधेः आनुश्चितर्योगः । तस्मात् विद्वद्वाक्ये न विधिः । विहितस्य आग्नेयादियागषट्कस्य फलित्वेन फलवत्त्वेन प्राधान्यं दर्शेष्टौ प्रयाजादीनां गुणत्वं च ज्ञेयम् । इति । के. )

भाट्ट—तत्र्य एव 'य एवं विद्वान् पौर्णमासीं यजते यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति, य एवं विद्वानमावास्यां यजते यावदतिरात्रेण' ( तैत्त. ११६।९ ) इत्यादिवाक्येऽपि आम्नातात् कर्मभेदः । न चात्र लट्, लेट्त्वेऽपि वा यच्छब्देन विधिप्रतिबन्धात् विधिपुनःश्रुत्यभाव । 'समिधो यजति' ( तैत्त. २।६।१ ) इतिवल्लिङ्गावगतेः । यच्छब्दस्य 'यो दीक्षितः' इतिवत् वेदनक्रियामात्रविधिप्रतिबन्धकत्वात् । अत एव पौर्णमास्यमावास्यापदमपि नामधेयम् । 'पौर्णमास्यां पौर्णमास्या' इति वाक्यद्वयेन एतद्वाक्यविहितकर्मणोरेव कालविधानात् । न च रूपाभावः 'आग्नेयी पूर्णमासेऽनूच्यते, इन्द्रवती अमावास्यायाम्' ( तैत्तं. २।५।२ ) इति वचनेन आग्नेयाग्नेयमन्त्रानामपि मन्त्राणां कर्म चाविना एतद्वाक्यविहितकर्माङ्गत्वेन विधानात् । मान्त्रवर्णिकाग्नीषोमदेवताप्राप्तः 'सर्वस्मै वा एतद्यज्ञाय गृह्यते यद् ध्रुवायामाज्यम्' ( तैत्त. ३।३।५ ) इति वचनेन च द्रव्यस्य प्राप्तत्वम् । अथवा, आग्नेयादिवाक्यैरेव पौर्णमास्यमावास्यादिशब्दवाच्यानि तद्वाक्यविहितकर्मानुवादेन द्रव्यदेवताविधानात् रूपलाभोऽवगन्तव्यः । न चानेकविधानात् वाक्यभेदः । अङ्गितेन देवताविशिष्टद्रव्यविना परस्परान्वयस्य प्रयुक्तत्वेन विशिष्टविधानुपपत्तेः । अयमन्योन्य रूपलाभस्तु दोषकृते एव द्रष्टव्य । सर्वथा विद्वद्वाक्ये कर्मान्तरविधिः । एवं च 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इति फलवाक्येन प्रजादीनामपरत्वेन

सर्वेषामाग्नेयादीनां एतद्वाक्यविहितकर्मणोश्च प्रथमपक्षे फलसम्बन्धः । द्वितीये तु तद्वाचकत्वेन तयोरेव दर्शपूर्णमासप्रातिपदिकस्य काल्योगिषु प्रसिद्धत्वेऽपि द्विवचनस्याप्रसिद्धत्वात्, आज्यभागादिषु तस्य प्रसिद्धत्वेऽपि प्रातिपदिकस्याप्रसिद्धत्वात् । अत्र यागमूलन्यायेन नाम्नः कर्मेतरफलत्वानुपपत्तेः प्रकरणात् सर्वेषामेव यागानां फलसम्बन्धः । षाडाधिकरणन्यायेन द्विवचनस्याप्रसिद्धत्वेऽपि प्रातिपदिकमात्रप्रसिद्ध्या काल्योगिनामेव वा अनयोरेव वा द्वित्वस्यापि कथञ्चिदुपपत्तेः फलसम्बन्धः । न तु पञ्चामेयाग्नेयादीनाम् । इति प्राप्ते, लिङ्गकमात्यभागाज्यभागाङ्गत्वेन वार्त्रघ्नीवृधन्वतीमन्त्राणां प्राप्तानां अपेक्षितयथास्थविधायकत्वेन वार्त्रघ्नीवाक्यस्योपपत्तौ नानपेक्षितगौरवापादकविद्वद्वाक्यविहितकर्माङ्गत्वबोधकत्वम् । अत एव कालद्वारेण कर्मद्वारेण वा व्यवस्थापकत्वमेव तदिति वक्ष्यते । अतश्च न तावदनेन देवताप्राप्तिः, नाप्याग्नेयादिवाक्येन, प्राप्तकर्मानुवादेन अनेकगुणविधाने वाक्यभेदात् । विधिकल्पस्य हि अज्ञातज्ञापनस्य एकविषयत्वमेव सर्वत्र क्लृप्तम् । तस्यानेकविषयत्वे वाक्यभङ्गः । न च विशिष्टविधानाद्वाक्यभेदः, विशिष्टस्यानुपपन्नत्वात् । उक्तं चैतत् कारकानामन्वयेन यत्र संहितादिवृत्तिः, न तत्र परस्परान्वयः, अपि तु यत्र अधाभिधानीमित्यादौ तदतिरिक्तप्रकरणेन वृत्तिलाभेन स इति । अतश्च प्रकृते देवतायास्य द्रव्यदानकारकत्वात् परस्परसम्बन्धानुपपत्तेः उभयविशिष्टकर्मान्तरविधानमेतावत्ककम् । अतश्च रूपाभावस्तदवस्थ एव । अस्तु वा कथञ्चित् रूपलाभः । तथापि न विद्वद्वाक्ये कर्मविधिः, यच्छब्देन विधिशक्तिप्रतिबन्धेन विधिपुनःश्रवणस्याभावात् । न च तत्र वेदनक्रियामात्रविधिप्रतिबन्धकत्वम्, यच्छब्दस्य तच्छब्दापेक्षानिरूपकत्वेन श्रुत्यतिविरुद्धत्वात् । किञ्च, अन्यथाप्यत्र कालागमकर्मसिद्धिः । तथा हि, अत्र विद्वद्वाक्यस्यान्तर्वर्तिना प्रकरणात् आग्नेयादयानां एव तत्कालयोगिनः तत्कर्मत्वेनानुवादरूपत्वात् नुवक्ते । कालयोगेन च कर्मेण अविना अनेकत्वेऽप्यनुवादसिद्धिः । तस्मात् प्रयोजन फलवाक्ये कालमेव फलार्थत्वसिद्धिः, प्रतिवादिना परन्तु कालयोगेन

प्रसिद्धत्वात्, द्विवचनस्य च स्वाश्रयाश्रयसमुदायघटक समुदायिवृत्तित्वसम्बन्धेन बहुत्वलक्षणार्थत्वात् । स्वशा तात्पर्यग्राहकमेव च सम्बन्धसम्बन्धघटकसमुदायसिद्धिद्वारा विद्वद्वाक्यद्वयम् । अन्यथा हि विद्वद्वाक्याभावे आग्नेयद्वयस्यैव एकवाक्योपादानावगतद्वित्वयोगिनः कालद्वययुक्तस्य च फलद्वयप्राप्तिः । यथा च 'यदाग्नेयोऽष्टाकपाल' इत्यत्र आग्नेयद्वयसिद्धिः तथा कौस्तुभे एव प्रपञ्चितम् । अत. एव्वा सम्बन्धसम्बन्धसिद्धिरेव उक्तविधया विद्वद्वाक्यप्रयोजनं इत्यभ्यस्तत्वादरि न 'नैभदेवेन यजेत' इतिवत् अभ्यासस्वरूपसिद्धिः । न चैव 'पौर्णमास्या पौर्णमास्या' इति वाक्यद्वयवैयर्थ्यापत्तिः, तस्य समुदितयागनिष्प्रयोगविधित्वेन सार्थक्यस्य एकादशे वक्ष्यमाणत्वात् । अन्यथा हि उत्पत्तिवाक्येषु प्रत्येक कालयोगात् प्रत्येकमेव पूर्वोत्तराङ्गसहितैःप्रधानप्रयोगा भवेयुः । एवं चोत्पत्तिवाक्ये कालश्रवणमपि विद्वद्वाक्याधिकारवाक्यस्थजिनत्वबोधार्थमेवेति समुदायसिद्ध्यर्थं समुदायिनामनुवादकावेतौ, न कर्मान्तरविधी इति सिद्धम् ।

मण्डन— 'वाक्यं न धर्मं विदधाति व एवमादि ।'

शंकर— 'विद्वद्वाक्येऽनुवादः स्यात् ।'

● पौर्णमासीन्यायं अमावास्यायामपि दर्शयति । 'पूर्वां पौर्णमासीमुपवसेदिति पैङ्ग्यम्, उत्तरामिति कौषीतकम्' । 'या पूर्वा पौर्णमासी सा अनुमतिः, या उत्तरा सा राका' इति पौर्णमासीन्यायः, तस्य अमावास्याया अतिदेशः 'या पूर्वाऽमावास्या सा सिनीवाली, योत्तरा सा कुहूः' इति । ऐब्रासा १२।५।२-३.

● पौर्णमासीमाम्नाकृता वैमृधस्य । ४।३।१३। १२-१५.

● पौर्णमासीमात्रकालिकत्वमुपांशुयाजस्य । १०। ८।१७।५१-६१.

⧗ पौर्णमासीवदुपांशुयाजः स्यात् । २।२।४।९ ॥

'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशावुपांशुयाजमन्तरा यजति' इति । तथा 'विष्णुरुपांशु यष्टव्योऽजामित्वाय, प्रजापतिरुपांशु यष्टव्योऽजामित्वाय, अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति । तत्र संदेह: किं विष्ण्वादिगुणकानां प्रकृतानां यागानां समुदायानुवादकम्, उत अपूर्वस्य यागस्य इति । इदानीमधिकरणत्रयेण पौर्णमास्यधिकरणोक्तसमुदायानुवादे कर्तव्ये सर्वात्मना पौर्णमास्यधिकरणसिद्धान्तोपजीवनात् उपांशुयाजपूर्वपक्षस्य अनन्तरमारम्भः । अत्राय पूर्वपक्षिणोऽभिसन्धिः । यथा पौर्णमास्यधिकरणे स्पष्टतमाग्नेयादीनां सन्निधिसमाम्नातस्य विद्वद्वाक्ययुगलस्य रूपाभावात् आग्नेयादिसमुदायानुवादकत्वम्, तथेहापि 'उपांशुयाजमन्तरा यजति' इत्यस्य विष्ण्वादिवाक्यविहितप्रकृतकर्मसमुदायानुवादकत्वम् । तथाहि विष्ण्वादिवाक्यानां तव्यप्रत्ययवशात् विधित्वं तावदसन्दिग्धम्, देवता च विष्ण्वादिपदैः प्रतीतैव । द्रव्यमपि भौवाज्यम् । उपांशुयाजवाक्ये वर्तमानरूपात् विधित्वमेव तावत् सन्दिग्धम् । यथाकथञ्चित् ध्रौवाज्यप्राप्तावपि न देवता समस्ति । न चोपांशुयागक्रमसमाम्नातमन्त्रसम्बन्धात् देवतालाभः, विष्ण्वादिदेवताप्रकाशका मन्त्रा यागेष्वेव लिङ्गबलेन संबध्यन्ते, नान्तरालवाक्ये । न च कर्मानुशिष्टतव्यप्रत्ययेन विष्ण्वादिदेवतानामेव कर्तव्यतावगमात् न यागविधानमिति वाच्यम् । यवतीलादौ उपसर्जनस्यापि यागस्य प्राधान्यावगतदेवताविशिष्टस्य अगत्या प्राधान्यविधानात् । न चात्र गत्यन्तरमस्ति, अन्तरालविध्यभावात् रूपाभावाच्च कर्मविधायकत्वस्य उक्तत्वात् । तदुक्तम्— 'यागान् विष्ण्वादिसंयुक्तैर्विहितान् रूपवत्तया । अरूपमन्तरायुक्तमगत्यैवानुलम्भते ॥' इति ( वा. पृ. ४८९ ) । न च अन्तरालवाक्यस्य अनुवादेयत्वात् तस्यैव कर्मण उपादानात् अनुपादेयत्वेन अन्तरालवाक्ये एव कर्मणो विधेयत्वमिति वाच्यम् । बुद्धिविच्छेदे हि सति अनुवादं प्रति उपादानं प्रकरणान्तरन्यायेन कर्मभेदकं भवति । न चात्र बुद्धिविच्छेदोऽस्ति, विष्ण्वादिवाक्येष्वपादितस्यैव सन्निधानात् । ननु जामित्वं अजामित्वायेत्येक वाक्यत्वगम्यते, जामित्वाजामित्वयोरेकविषयत्वात् । तयोः संगतिः, यदि अन्तरालवाक्यस्य विधायकत्वं विष्ण्वादिवाक्यानां च अर्थवादत्वम् । विष्ण्वादिवाक्यानां विधायकत्वे विधिभेदेन वाक्यभेदात् अजामित्वाद्य विहन्यते । एक-

वाक्यसम्भवे हि वाक्यभेदो दोष एवेति । अत्र च अन्तरालवाक्यस्य अविधायकत्वस्योक्तत्वात् विष्ण्वादियुक्तानां विधायकत्वम्, तथा सति भिन्नविधिप्रत्येकत्वेन वाक्यभेदस्यैव प्रमाणबलादायातत्वान्न दोषावहत्वम् । यच्च जामित्वाजामित्वयोः एकविषयत्वम्, तद्भिन्नवाक्येऽपि जामित्वे तस्य तु अनुषङ्गकल्पनया अवरुद्धत्वम् । तेन यथा 'तनूः' ( 'तनूर्वर्षिष्ठा गह्वरेष्ठोग्र यज्ञो अपाकर्षी देवं मन्त्रो अपाकर्षी स्वाहा' इति मन्त्रः । ) इत्यस्य तन्त्रोच्चारितस्यैव 'रजाशया, हराशया' इत्येतत्संबन्धः, तथा जामित्वस्यापि विष्ण्वादियुक्तवाक्यस्थेऽपि तन्त्रेण संबन्धः । न च वाक्यसंबन्धिजामित्वोपक्रमात् तस्मान्तरालवाक्यव्यवहितस्य कथं विष्ण्वादिवाक्यैः संबन्धः, अन्तरालवाक्यस्यापि तदनुवादकत्वेन तद्व्यवधानाकल्पनाभावात् । ननु भवतु विष्ण्वादिवाक्यानां कर्मविधायकत्वम्, अन्तरालवाक्यस्य तु कथं सर्वानुवादकत्वम्, अन्तरालस्यैव अप्राप्तत्वेन विधानात् । नैवम्, जामितादोषैः विष्ण्वादिवाक्येऽपि अजामित्वानुवादेन अन्तरालस्यापि प्राप्तत्वात् । भवति च अनुवादतोऽपि स्थाननियमः । यथा 'न गिरागिरेति ब्रूयात्' इति गिरापदनिषेधानुवादकत्वात् इरापदस्थाननिवेशित्वम् । इति न किंचिदेतत् । अनुवादप्रयोजनं च 'उपांशुयाजमन्तरा यजति' इत्यनेन विष्ण्वादियुक्तकर्मणां सर्वेषामुपांशुयाजनामत्वं भवति । तथा च सति 'उपांशु पौर्णमास्यां यजन्' इति वाक्यैकदेशेन अनूदितानां पौर्णमासीकालसंबन्धः । तत्रश्च फलवाक्ये सर्वेषामेवोपादानमिति । अतः पौर्णमासीवत् 'उपांशुयाजमन्तरा यजति' इत्येतदपि वाक्यं समुदायानुवादकमेवेति ।

चोदना वाऽप्रकृतत्वात् । १० ॥

एवं प्राप्ते, ब्रूमः । भवेदेवं यदि विष्ण्वादिवाक्येषांशविधानं भवेत् । न त्वेतदस्ति । तथाहि यथा 'वैश्वानरं द्वादशकपालं निर्वपेत्' इत्युपक्रम्य 'यद् द्वादशकपालो भवति' इत्यादिना द्वादशकपालस्यैव स्तुतिदर्शनात् उपक्रमोपसंहारयोरेकविषयत्वे सति तदन्तर्गतानामष्टत्वादीनां न पृथग्विधिविषयत्वम्, तथात्रापि 'जामि वा एतद्यज्ञस्य क्रियते' इत्युपक्रमे पुरोडाशयोर्जामितादोषोपक्रमात् अन्ते च तदपनयनरूपाजामित्वोपसंहारादेकवाक्यत्वम् । तच्च तदैव संगच्छते, यदि एकस्यैव विधित्वं इतरेषामर्थवादत्वम् । उपक्रमस्थजामित्वदोषश्च अन्तरालसंबन्धिकर्मविधानमेवापेक्षते । तस्यैव जामित्वदोषापनयनहेतुत्वात् । तथाभूतं च 'उपांशुयाजमन्तरा यजति' इति वाक्यम् । तत्तदेव विधायकम्, विष्ण्वादियुक्तानां चार्थवादत्वमेव निर्णीयते । यदुक्तम्, यथा 'तनूः' इति पदस्य तन्त्रोच्चारितस्यैव रजाशयाहराशयावाक्यसंबन्धः, तथा जामित्वस्यापि तन्त्रोच्चारितस्य विष्ण्वादिवाक्यसंबन्धात् सर्वेष्वेवोपक्रमोपसंहारयोरेकविषयत्वमिति । तदयुक्तम्, तत्र हि एकवाक्यत्वेन विष्ण्वादियुक्तानां अन्तरालयुक्तविधिविशेषत्वासंभवात् वाक्यभेदे सति अवश्यं कल्पनीयत्वात् पदान्तरसंबन्धस्य अध्याहारात् तन्त्रोच्चारितपदान्तरकल्पनाया एव लघुत्वात् तथा आश्रितमिति जानीमः । इदं तु प्रथमावगतैकवाक्यत्वेन विष्ण्वादियुक्तानामन्तरालयुक्तविधिविशेषत्वेनैव वाक्यान्तरत्वासंभवात् उपक्रमस्य तन्त्रत्वकल्पनाया प्रमाणमस्ति । एवं च सति अर्थवादसंबन्धाद्विधित्वमसंदिग्धम् । न च रूपाभावात् न कर्मविधित्वमिति वाच्यम् । तथाहि, द्रव्यं तावत् साधारणं औषधमेवा[illegible]मिति । देवताऽपि च मान्त्रवर्णिकी । उपांशुयाजक्रमे हि वैष्णवप्राजापत्याग्नीषोमीययाज्यानुवाक्यायुगलानि आम्नायन्ते । तैश्च तुल्यार्थतया विकल्प्यमानैर्वैकल्पिक एव देवताः प्राप्यन्ते । नहि अन्यथा क्रमागतता मन्त्रा अङ्गभावं प्रतिपद्यन्ते, समवेतार्थप्रकाशनेनैव मन्त्रस्याङ्गत्वात् । न च एकवाक्यानुरोधेन अर्थवादस्यैव देवतासमर्पकत्वमिति वाच्यम् । अर्थवादानां स्वार्थाभिकस्तुतिपरत्वेन मुख्यार्थस्तुतिपरत्वाभावात् । तत्परत्वे तात्पर्ये वाक्यभेदप्रसङ्गात् । मं च यत्यन्तरं नास्तीति नार्थवादत्वेन संबन्धः । किंच 'विष्णुरुपांशु यष्टव्यः' इत्याद्यभिधानात् उपसर्जनीभूतो यागः प्रतीयते, विष्ण्वादयश्च प्रधानतया । यागाभ्युपगमे च विष्णुदेवताको यागः कर्तव्य इति निष्कृष्य रूपयत्नेन यागे विष्ण्वादयः अप्रधानभूता इत्यर्थात् कल्पनीयम् । न च 'उपांशुयाजमन्तरा यजति' इति यागस्य प्राधान्येन प्रत्यक्षविधौ सति कल्पनामर्हति । 'विष्णुं यजति' इत्यादिषु गुणतः

उपसर्जनार्थविधिपरत्वमपि स्वीकृतम् । अत्र तु अन्तराल वाक्यस्यैव विधित्वेन यागसमाद्वेयम्यम् । अत अन्त राल्वाक्यस्यैव . . विष्ण्वादिवाक्याना [illegible] अनादत्वम् । तदुक्तम्- ' विष्ण्वादियागसम्बन्धे कृते यागोऽर्थवो भवेत् । उपसर्जनभूतश्च श्रौते चैतन्न युज्यते ॥ ' इति (वा पृ ४९१) । अत सर्वथा विष्ण्वादिवाक्याना विधित्वासम्भवात् अन्तरावाक्यस्यैव कर्मविधायकत्वम्, न तु अर्थवादत्वमिति सिद्धम् ।

प्रयोजनम्- पूर्वपक्षे वैष्णवादिकर्मणामनुष्ठानम्, सिद्धान्ते [illegible] एकस्यैवेति । सूत्र तु अन्तरावाक्ये कर्म चोदना विष्ण्वादिवाक्यानामविधायकत्वेन कर्मणामप्रकृत- त्वादिति । तदुक्तम्- ' प्रकृतानामसद्भावाद् गम्यते नानुवादता । यागो विष्ण्वादिसंयुक्तेर्न हि यास्यै विधीयते ॥ ' इति ( वा पृ ४९० ) । अत्र केचित् ' तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन् ' इत्यतदेवोपांशुयाजस्य उत्पत्तिवाक्य मिति वदन्ति । अत्र च तेषामभिसन्धि — अत्र तावत् द्रव्यदेवताकालोपांशुत्वविशिष्टो याग प्रतीयते । विधेश्चात्र विध्यन्तरस्योपरराभावेन अनुवादत्वासम्भवात् परेणापि पौर्णमासीकालविधानायावश्य कल्पनीय । स चात्र रूपकमानयागलाभसौकर्यात् द्रव्यादिविशिष्टयागविषय एव कल्पनीय । अन्तरालवाक्ये तु कर्मोत्पत्तौ द्रव्यदेवतादि कल्पनेन कल्पनीयम् । किञ्च पौर्णमासीकालसम्बद्धाग्नीषोमीयपुरोडाशद्वयान्तरालविधानामाणे उपांशुत्वं आज्यत्वादौ च पौर्णमासीकालस्य प्राप्तत्वात् ' तावब्रूताम् ' इति वाक्य मनर्थकमेव भवेत् । अनेन तु विशिष्टकर्मविधौ अन्त रालस्य अप्राप्तत्वात् तद्विधानेनैव अन्तरालवाक्यमर्थव दिति । तेन ' तावब्रूताम् ' इत्येतदेव उपांशुयाजोत्पत्ति- वाक्यम् । अन्तरावाक्यं तु अन्तरालविधायकमेवेति । एवं च सति सोमयागेन उत्पत्तौ कार्यंकत्वाविशेषात् एकरूपतया लघुत्वानुग्राहकत्वेन ' य एवं विद्वान् ' इत्यादिना प्रकृतकर्मण भविष्यतीति ।

तदयुक्तम्, अप्रमाणत्वात् तावदिदं वाक्यम् । सर्वत्र च अनुवादपूर्वं प्रतीतिहेतुभेदेनैव प्रथमं प्रमाणत्वं भवति । तदन्तरे रूपमनूद्य कल्पितविधिना अनूद्यमानतया प्रतीयमानो विधीयते इति स्थितम् । तत्र पूर्वप्रतीतिहेतुमन्वेषणे ' उपांशुयाजमन्तरा यजति ' इति संनिहिते प्रत्यक्षयागविधिदर्शनात् न तावत् यागविधि कल्पयितु शक्यते । तेन विशिष्टयाग- विधानासंभवात् एक एव गुणो विधातव्य, एकस्मिन् कर्मणि अनेकगुणविधाने वाक्यभेदात् । तत्र आज्यस्यापि ध्रुवावाक्यप्राप्तत्वात्र विधानम् । देवता चात्र प्रतीयते एव । अग्नीषोमसम्बन्धे तद्धितचतुर्थ्यौ अश्रवणादग्नीषोमौ इति प्रथमाद्विवचनेन प्रातिपदिकार्थमात्रविधानात् सत्यपि वा देवताप्रत्यये मन्त्रवर्णप्राप्तानुवादत्वेनैव उपपत्तौ न विधित्वम् । उपांशुत्वमपि अन्तरावाक्यप्राप्त न विधेयम् । न च उपांशुयाजपदस्य नामत्वात् नोपांशुत्वमपनो लब्ध मिति वाच्यम् । यत समभिव्याहारमात्रेण अन्तरालवाक्ये नामत्व स्फुरति । वस्तुतस्तु तत्प्रत्ययवाक्यान्तराभावात् अर्थवादस्य चाविधायकत्वात् याजशब्देन नानुवाद, उपांशुत्व च विधीयत एवेति । तदुक्तम्- ' न च त त्स्वरूपेण नामैतदुपपद्यते । विहित न ह्युपां- शुत्व शास्त्रेणान्येन केन चित् ॥ ' इति ( वा पृ ४९४ ) । अत पौर्णमासीकाल एव अप्राप्तत्वात् अत्र विधीयते इति युक्तम् । ननु तस्यापि पुरोडाशद्वयान्तराल- विधानेन अप्राप्तत्वात् तद्विधानमपि व्यर्थम् । मैवम्, यदि पौर्णमासीकालविधिर्न स्यात् ' उपांशुयाजमन्तरा यजति ' इत्यत्र पुरोडाशद्वयान्तरालाभावात् उपांशुयाजो न भवेत् । यदा तु अन्तरालसापेक्षत्वेऽपि पौर्णमासी- काले केवल पौर्णमासीकालविधानम्, तेनैतत् ज्ञायते- अन्तरालापेक्ष एव पौर्णमासीकाल, उपांशुयाजश्चा न्तरालकल्प्य च [illegible]मिति । तस्य च कालस्य एकपुरोडाशायामपि पौर्णमास्यां सद्भावा द्युक्तमुपांशुयाजानुष्ठानम् । एतदेव दशमे वक्ष्यति- ' अन्तरालो हि कालस्य [illegible] हि पुरोडाशौ ' इति । अतो वा नाप कालविधिरिति । एवं यदत्र व्याघात विरोधोऽपि नास्ति । एष हि वक्ष्यति जैमिनि — ' तद्वत् देवतायां स्यात् ' इति । अनेन सूत्रेण उपांशु याजे यथा द्रव्ये अनियम, तथा देवतायामपि अनियम पूर्वपक्ष प्रतिपाद्यते । तदेतद्भवतापि नोपपद्यते ।

अन्तरालवाक्ये हि कर्मोत्पत्तौ द्रव्यदेवतयोरनिश्चयः संभाव्यते । तत्र द्रव्यदेवतयोरश्रवणात् 'तावनूताम्' इत्यत्र उपांशुयाजोत्पत्तौ स्ववाक्ये एव द्रव्यदेवतयोर्लाभात् अनियमाशङ्का कुतः । तथा 'विष्णुर्वा स्याद्धोत्राम्नानसामर्थ्यात्' इति । तथा 'मौनाद्वा सर्वसंयोगात्' इति च । सिद्धान्तेऽपि मान्त्रवर्णिकदेवतालाभो वाक्यान्तरावगतद्रव्यलाभे सति संभवति, न तूत्पत्तिगतद्रव्यदेवतालाभे सति, इति यत्किञ्चिदेतदिति यथावार्तिकं अन्तरालवाक्यमेव उत्पादकमिति साधीय इति । तौता.

* पौर्णमासीवदुपांशुयाजः स्यात् । २।२।४।९ ॥

'जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ, उपांशुयाजमन्तरा यजति' 'विष्णुरुपांशु यष्टव्योऽजामित्वाय' 'प्रजापतिरुपांशु यष्टव्योऽजामित्वाय' 'अग्नीषोमावुपांशु यष्टव्यावजामित्वाय' इति श्रूयते । तत्र किं उपांशुयाजशब्दः विष्ण्वादिगुणकानां प्रकृतानां यागानां समुदायस्य वाचकः, किंवा अपूर्वस्य यागस्य इति विचारे पूर्वपक्षमाह । उपांशुयाजः इति शब्दः समुदायवाचकः स्यात् पौर्णमासीवत् त्रिकात्मकपौर्णमास्यमानाख्यशब्दवत् ।

चोदना वाऽप्रकृतत्वात् । १० ॥

पूर्वपक्षं वाशब्देन परिहरन् सिद्धान्तमाह । उपांशुयाज इति शब्दः चोदना कर्मान्तरवाचकः स्यात् । यागानां अप्रकृतत्वात् । 'विष्णुरुपांशु यष्टव्य' इत्यादयस्तु न विधयः, किन्तु अर्थवादाः । तस्मात् यागान्तरमुपांशुयाजः ।

गुणोपबन्धात् । ११ ॥

'उपांशुयाजमन्तरा यजति' इत्युपांशुयाजशब्देन उपांशुत्वगुणस्यैव उपबन्धात् विधानात्, विशिष्टविधानाच्च न वाक्यभेदः । किंवा 'उपांशु पौर्णमास्या यजन्' इति कालमन्त्रपरे वाक्ये उपांशुत्वगुणस्य उपबन्धात् विधानात् तन्निमित्तं उपांशुयाजनामधेयम् । उत्पत्तिवाक्यस्थेन उपांशुयाजशब्देन उपांशुत्वस्य गुणस्य उपबन्धात् उपांशुयाजशब्दार्थज्ञानं भवति । इति अन्तरालवाक्ये एव कर्मचोदना ।

प्राये वचनाच्च । १२ ॥

प्राये बहुप्रधानकर्मसमभिव्याहारे 'शिरो वा एतद्यज्ञस्य यदाग्नेयो हृदयमुपांशुयाजः पादावग्नीषोमीयः' इत्यर्थवादे उपांशुयाजस्य वचनात् पठनात् उपांशुयाजस्य प्राधान्यावगमात् अन्तरालवाक्ये उपांशुयाजविधिरेव । तस्मात् नोपांशुयाजवाक्यं पौर्णमासीवाक्यवत् समुदायानुवादः इति सिद्धान्तः ।

'प्रधानेति भाष्येण (प्रधानप्राये वचनं प्रधानकर्मतामुपोद्बलयति) उपांशुयाजस्य प्रधानप्राये वचनात् प्राधान्यावगतेः विष्ण्वादिवाक्यैश्च विधौ उपांशुयाजभेदे सति अग्नीषोमीयस्यैव उपांशुयाजस्य कालविधिप्रसङ्गात् विधिवाक्यानुदितत्वात् फलवाक्यप्रसङ्गे प्राधान्यात् वैष्णवप्राजापत्ययोरुपांशुयाजयोः गुणत्वापत्तेः उपांशुयाजमानप्राधान्यावगतिबाधप्रसङ्गात् नोपांशुयाजवाक्यं पौर्णमासीवाक्यवत् समुदायानुवाद इत्येवं सूत्रं व्याख्यातम् ।' इति सुधा. पृ. ७५९ । के.

* पौर्णमासीशब्दः त्रिषु आग्नेयादिषु यः समुदायः, तत्र (तद्वाचक इत्यर्थः) । भा. ४।४।१३।३४.

* पौर्णमासीस्थयोराज्यभागयोः वार्त्रघ्नी, वृधन्वती अमावास्यास्थयोः इति व्यवस्था । वा. २।२।१।१ पृ. ४७८.

* सर्वत्र हि तुल्यरूपाणां तुल्यधर्माणां विभागे पौर्वापर्यं भवति । तद्यथा देवदत्तमनुगच्छतीति । यदि देवदत्तोऽपि गच्छति एवमनुगमनमवकल्पते । तथा अनुवचनमपि । वा २।३।१०।२१, न चावश्यं तुल्यजातीययोरेव पौर्वापर्यं भवति अतुल्यजातीययोरपि पौर्वापर्यं भवति । तथा पाकमनुभुङ्क्ते इति अविरोधोपपत्तेः । यत्तु देवदत्तो यज्ञदत्तमनुगच्छतीति एतत्तुल्यकर्मत्वं गम्यते इति युक्तम्, तत्र वर्तमानोपादाने सति क्रियाऽन्तरानुपादानात् । २२, * पौर्वापर्येण विरोधे पूर्वं परेण बाध्यते । प्राप्तबाधोऽत्र । ३।३।७।१४ पृ. ८६०. * पौर्वापर्ये अपच्छेदयोः परनिमित्तकं प्रायश्चित्तं कार्यम् । अपच्छेदन्याय । ६।५।१९।५४ * 'पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत्' इत्यपच्छेदाधिकरणन्यायेन उपक्रमगतस्य परेण बाधः, इति चेन्न, परस्य

स्थानत्वे एव तन्यायप्रवृत्ते । कु ३।३।१।१२ * 'पौवापर्ये०' इति न्यायेन काम्य नित्यस्य बाधकम् । ( वार्तेणे द्वादशकपालस्य अष्टकपालादिर्बाधक । पूर्व पक्षे ) । सु पृ ८८८, * 'पौर्वापर्ये०' इति न्यायेन पश्चाद्भाविविधयनुरोधेन अर्थवाद यास्यथा उभयो सम्प्रति पश्चायत्वात् आनयक्यपरिहार । इति शङ्का । पृ १५०० * 'पौर्वापर्ये०' इति न्यायेन प्रथमोत्पन्नायाः अपि कर्ता मोक्तन्यादिविष उत्तरेण ब्रह्मा मग्नानन्न बाध्यत्वम् । उप देशसाहस्री पद्य प्र २ श्लो ३ रामतीय * 'पौर्वापर्ये०' इति न्यायेन श्रुतस्य प्रामाण्य शास्त्रोपक्रमे उक्तम् । कल्पतरु ४।१।२।३ ब्रसू. * ननु पौर्वापर्ये०' इत्यनेन ( न्यायेन ) उपक्रममपि अर्थवादात् मुख्येन यान बाधितया विध्युपक्रमेण एक्षेत । वा ३।३।१।१२ पृ ८०६, * साक्षात् ( आधान ) प्रसाङ्गकर्म ( उद्देश्य ) चादरमवगम्यते । प्रयोगवचनग्रहणोत्तर काल तु पश्चाचन एव प्रधानधर्म ( उपांशुत्व ) 'पौर्वापर्ये०' इत्यत्र बाधते । ३।३।२।९ पृ ८११ * 'पौर्वापर्ये०' इति न्यायस्य अन्योन्यानपेक्षबुद्धिजन्यविषयत्वात् बाधस्तु लिङ्गादौ अप्राप्ति । सु पृ १२२०

* पौर्वापर्ये पूर्वदौर्बल्यं प्रकृतिवत् । ६।५। १९।५४ ॥

यस्मिन् ज्योतिष्टोमप्रयोगे बहिष्पवमानार्थं सर्पणे ऋत्विक्पङ्क्तिरूपेण अन्वारम्य गच्छता ऋत्विजां मध्ये उद्गाता प्रतिहर्ता च अपच्छेदे येन चित् क्रमेण वर्तेते तयोः अपच्छेदः पूर्वं चेत् तन्निमित्तक प्रायश्चित्त कर्तव्यम्, नोत्तरनिमित्तक इति पूर्वपक्षे सिद्धान्तमाह । अपच्छेदयो पौर्वापर्ये सति पूर्वदौर्बल्य पूर्वस्य उत्तरापेक्षया दुर्बलत्व ज्ञेयम् । उत्तरस्य अपच्छेदस्य प्राबल्यम् । तेन उत्तरापच्छेदनिमित्तक यत् प्रायश्चित्त तत् कर्तव्यम् । प्रकृति यत् प्रकृतिवत् पूर्वं भवति विकृतिस्तु उत्तरम् । तत्र प्रकृतिगत अङ्गविधयः विकृतिगत प्रबलतरै बाध्यन्ते । यथा दर्श प्रकृति पशुर्विकृति । दर्शात् पशौ पञ्च प्रयाजाः प्राप्नुवन्ति । पशौ तु एकादश प्रयाजा विहिता । तत्र वैकृत एकादशत्व प्राकृत पञ्चत्व बाधित्वैव प्रवर्तते, नान्यथा । तद्वत् अपच्छेदेऽपि उत्तरापच्छेदनिमित्तकमेव प्रायश्चित्त कर्तव्य भवति न पूर्वापच्छेदनिमित्तकम् । यत्र पौर्वापर्येण द्वय प्राप्त तत्र द्वयोरनुष्ठाने विरोधे सति अयं पौर्वापर्यन्याय प्रवर्तते । यत्र तु उभयोरनुष्ठाने न विरोधप्रसङ्ग तत्र नायं न्याय । यथा उत्तराधिकरणे । के

* 'पौर्वापर्ये पूर्वनिविष्टस्यैव बाधनम् ।' वा ३।६।३।१० पृ १०३३

* नित्यनैमित्तिकयो , नित्यकाम्ययो , प्राकृतवैकृतयोश्च पौर्वापर्यनैमित्तिकन्यायेन पूर्वबाध । टुप् ६।५।१९।५४

* पौर्वापर्यन्याय । पौर्वापर्यबलीयस्त्वन्याय । ६।५।१९।५४ मीको पृ ४९९ 'अपच्छेदन्याय' इत्यत्र द्रष्टव्यम् । * ज्येष्ठप्रमाणस्यापि पौर्वापर्यन्यायेन बाधाशङ्का । कल्पतरु १।१।१ ब्रसू पृ ९

* सावे प्रयोगे केवलोद्गात्रपच्छेदे, द्वितीयप्रयोगे च केवलप्रतिहर्त्रपच्छेदे पौर्वापर्यन्यायप्रवृत्ति । बाल पृ ११७

* पौर्वापर्यप्रत्यासत्तिक्रमात् यथासंख्यक्रम बलीयान् । काण्डे यथाकाण्डे पौर्वापर्यप्रत्यासत्तिक्रमेण एकाक्षमनुगम्यतो इष्टिद्वयेऽपि अनियमेन प्राप्नुवतो यथासंख्यक्रमेण असन्देहसाम्येन प्रमाणत्वात् विनियोगो भवति । वा ३।३।७।१४ पृ ८४०

* पौर्वापर्यबलीयस्त्व तत्र नाम प्रतीयते । अन्योन्यनिरपेक्षाणां यत्र जन्म धियां भवेत् ॥' ये हि भिन्नवाक्यगता परस्परानपेक्षा विरोधिनोऽर्था श्रूयन्ते, तेषां पूर्वस्य उत्तरानुपमर्देनैव लब्धात्मकत्वात् उत्तरस्य पूर्वोपमर्देन विना आत्मलाभानुपपत्ते पौर्वापर्यबलीयस्त्वन्यायो भवति । यत्र तु एकवाक्यतया परस्परापेक्षया अवगमः, न तत्र एवद्भवति । तत्र हि आकाङ्क्षावशेन एकवाक्यता भवति । पूर्वप्रतीते च उत्तरस्यानुगुण अधिक वा आकाङ्क्षते । अतश्च यत् अनधिक अननुगुण वा, तद् नपेक्षितत्वात् नैव तस्मिन् वाक्येऽस्ति । न चाविद्यमानेन पूर्वबाध शक्यते इति पूर्वबलीयस्त्व भवति । वा ३।३।१।१२ पृ ८०६

* श्रुत्यादिकल्पनाद्वाराऽपि लिङ्गादीनां प्रामाण्ये विरोधेऽपि स्मृतिवत् श्रुत्यादिचतुष्ट्यान्यतरमूलन्यायेन श्रुत्यादिकल्पनस्य दुर्वारस्य स्वकल्पनापेक्षत्वेन श्रुत्यादिभ्य. पश्चात् प्रवृत्तेः कल्प्यश्रुत्याद्यपेक्षत्वेऽपि च विरोधिश्रुत्याद्यनपेक्षश्रुतत्वात् **पौर्वापर्यबलीयस्त्वन्यायेन एव** (६।५।१९) येषांस्य शुल्कामियोः । सु. पृ. १२१८.

* पौष्कलं नाम साम 'यज्ञस्य मधुमत्तमः' (६९२-९३) इति ककुप्-सतोबृहतीरूपऋग्द्वयात्मके सूक्ते गेयं तृतीये सवने आर्भवपवमाने । (इति पूर्वपक्षे उक्तम्) । पौष्कलं च तृचे न गेयं किंतु एकस्यामेव ऋचि 'ककुभि' इत्येकवचनेन विशेषविधानात् (इति सिद्धान्ते उक्तम्) । वि. ९।२।६ वर्णके ३.

* पौष्णं पेषणं केवलपूषदैवत्ये, न तु सोमापौष्णादौ द्विदैवत्ये । (सोमापौष्णः, ऐन्द्रापौष्णः चरुश्चे ।) । ३।३।१५.

卐 पौष्णं पेषणं चरावेव ॥

तत् सर्वार्थमविशेषात् । ३।३।१४।३५॥

भाष्यम्— पौष्णं पेषणं प्रकृतौ श्रूयमाणं विकृतौ इत्युक्तम् (पूर्वाधिकरणे) । तत्र संदेहः किं चरौ, पशौ, पुरोडाशे च, उत चरावेवेति । किं तावत् प्राप्तम् ? तत् सर्वत्र स्यात् चरौ पशौ पुरोडाशे च । कुतः ? अविशेषात् । न कश्चित् विशेषः आश्रीयते । तस्मात् सर्वत्रेति ।

वा— तत् सर्वार्थमविशेषात् ॥ (सूत्रमात्रं पठितम्, न व्याख्यातम्) ।

चरौ वाऽर्थोक्तं पुरोडाशेऽर्थविप्रतिषेधात् पशौ न स्यात् । ३६ ॥

भाष्यम्— चरौ पौष्णं पेषणं विनियुज्येत । पुरोडाशं तावत् पेषणमर्थादेव प्राप्नोति । नैवान्यथा पुरोडाशो भवति । तदर्थं तावन्न वचनम् । पशौ च न स्यात् । हृदयादिषु पिष्यमाणेषु तेषामाकारविनाशः स्यात् । तत्र को दोषः ? 'हृदयस्याग्रेऽवद्यति' इति न हृदयादवदायिष्यते । तथा अन्यदपि अवदानं न यथाश्रुतादवदास्यते । ननु शक्यते पिष्टेभ्योऽपि हृदयादिभ्योऽवदातुम् । नेति ब्रूमः । आकारा हृदयादयो न मांसानि । उक्तमेतत् आकृतिः शब्दार्थ इति । यद्यपि पुनस्तदाकृतिकः क्रियते, तथापि अस्योत्पादनप्रदेशं प्रति मुह्येयुः । तस्मात् चरौ पौष्णं पेषणं भविष्यतीत्येवमर्थं वचनम् ।

वा— चरौ वाऽर्थोक्तम्० ॥ यदि कश्चिद्वदेत् लौकिकपिष्टोपादानेनापि पुरोडाशसिद्धेर्नैकान्तेन अर्थाक्षिप्त इति, तं प्रति उच्यते । अर्थो नाम प्राकृत उपकारः । तस्य प्रकृतौ पेषणं साधनमासीत् अतस्तेन पूर्वतरप्राप्तेन उक्तं पुरोडाशे पेषणम् । पशौ च प्रधानवैगुण्यं स्यात् । तद्धि हृदयाद्याकृतिकेन तत्त्वश्च अयत्नेन साधयितव्यम् । न च पिष्टे तदाकृतिरुद्धरीयेत । पुनस्तदाकारकरणेऽपि मृद्घटादिवत् गौणादवदीयमाने वैगुण्यमेव । 'उत्सादनदेशादवद्यति' इति च श्रूयते । न च हृदयादेः पिष्टस्य ज्ञायेत कतरेण प्रदेशेनेदं पयोरुत्कृत्तमिति । तस्मात् चरावप्रतिषिद्धं अनर्थकत्वं च पेषणमिति तत्रैव विधीयते । ननु 'अदन्तको हि' इति हेतुविशेषात् पशुपुरोडाशयोरपि प्राप्ते. हृदयावदानानि तच्छेषाश्च पिष्ट्वा दास्यन्ते । न च प्राप्तिविप्रतिषेधौ भविष्यत. । उच्यते । हृदयावदानस्य प्रदानप्रकमत्वात् नान्तरा पेषणेन व्यवधानं युक्तम् । हेतुवन्निगदस्य च स्तुतिमात्रार्थत्वं वक्ष्यते । तेन स्वक्रमस्थस्यैव पेषणस्य विधि. । आनीतमात्रमेव च पेषणं पुरोडाशे अनुवादबुद्ध्या वक्ष्यते, चरौ च निवर्तमानं प्रतिप्रसवत्वेन, पशौ पुनरत्यन्तमप्राप्तविधित्वेन । न चैतानि एकस्यैव वाक्यस्यैतावन्ति रूपाणि विधीयन्ते । तथानवयमेकरूप्ये अभ्युपगन्तव्ये आवरणदर्थवत्त्वाच्च प्रतिप्रसवत्वमेवावधारणीयम् । एवं सिद्धं केवलचरुविषयत्वम् ।

चरावपीति चेत् । ३७ ॥

भाष्यम्— इति चेत्पश्यसि भवान्, अर्थविप्रतिषेधान्न पशावेमिति । ननु चरावपि अर्थविप्रतिषेध. । विशदसिद्धे ओदने चरुशब्दमुपचरन्ति । पिष्यमाणो हि पिष्टकं यवागूर्वा स्यात् चरुर्वा ।

वा— चरावपीति चेत् ॥ (सूत्रपाठमात्रं कृतम्) ।

न, पक्तिनामत्वात् । ३८ ॥

भाष्यम्— अत्रोच्यते । सत्यं विशदसिद्धे ओदने चरुशब्दः प्रयुज्यते । विशदसिद्धश्चरुरीयते इति, न तस्य

विशदसिद्धिर्निमित्तम् । यदि विशदसिद्धिर्निमित्तं स्यात्, न पिष्टसिद्धे प्रयुज्येत । तथापि हि प्रयुज्यते, 'पिष्टक चरुः साध्यते' इति । अतोऽन्यदेतयोः सामान्यं तन्निमित्तम् । तदेतदुच्यते न पक्तिनामत्वादिति । न चरौ विप्रतिषेधः । कथम् ? पक्तिनामत्वात् । पक्तिनामैतत् चरुरिति । अनवस्रावितान्तरूष्मपाकेन अभिनिर्वर्त्यस्य भवति चरुशब्दो वाचकः । तेन पिष्टे ओदने च विशदौदने च प्रयोक्तारो भवन्ति चरुरिति । पश्वोक्त्यैव प्रयोजनम् । पूर्वपक्षे पशावपि पेषणम् । सिद्धान्ते चरावेव ।

वा— न, पक्तिनामत्वात् ॥ न चरावर्थविप्रतिषेधः । कथम् ? 'गतिः सर्वपदार्थानां लौकिकव्यवहारतः । तत्र पाकविशेषश्च चरुत्वेनावधार्यते ॥' ओदनपिष्टक चरुप्रयुक्तस्य चरुशब्दस्य अनेकार्थत्वमशक्यमिति उभय सामान्यवचनत्वं विज्ञायते । तयोश्च सामान्यमनवस्रावितान्तरूष्मपक्वत्वम् । तस्मादविप्रतिषेधः । पश्वोक्तं प्रयोजनमिति । मन्दं प्रयुक्तम् । एतावान् समाधिः अविशेषेऽपि न पुरोडाशाधत्वे प्रयोजनम् । किं तर्हि ? पश्वर्थत्वमिति ।

शा— सर्वत्र स्यात् इति प्राप्ते, उच्यते । 'पुरोडाशोऽन्यत्र सिद्धम्, पशावाकृतिनाशनम् । पेषणं तेन न तयोर्विधातव्यं चरौ पुनः । अविधावक-सप्राप्तमिति तत्र विधीयते ॥'

सोम— प्रासङ्गिकी सङ्गतिः ।

वि— 'चरौ पशौ पुरोडाशे चरावेवोक्त पेषणम् ।, विशेषादर्शनादेतत् सर्वेष्वपि विधीयते ॥, प्राप्तत्वाच्च पुरोडाशे हृदयाकारनाशनात् । न पशौ पारिशेष्येण चरावेव हि पेषणम् ॥' १९

भाट्ट— तत् पेषणं पूषदेवत्ये चरौ पशौ पुरोडाशे च स्यात्, उत चरावेवेति चिन्तायाम्, अविशेषादन्वयव्यतिरेकानुपपत्तेश्च सर्वत्र । इति प्राप्ते, पुरोडाशे तावत् पाकात् पूर्वं पेषणस्य प्राप्तत्वादेव विधानं व्यर्थम्, तदुत्तरं तु पुरोडाशपदवाच्याकृति विनाशापत्तिः । एवं पशुहृदयादावपि । तेषामपि आकारविशेषविशिष्टमांसवाचित्वात् । न च उभयत्र अवदानोत्तरकाले पेषणविधिः, अत्यन्ताप्राप्तपेषण विधौ गौरवापत्तेः । चरौ अतिदेशेन प्रसक्तस्य प्रयोजनाभावेन निवर्तमानस्य प्रतिप्रसवमात्रकरणे तु लाघवम् । प्रकृतौ हि प्रदेयपुरोडाशसिद्धेः अन्यथोपपादयितुमशक्यत्वात् अर्थप्राप्तमपि पेषणं आध्वर्यवकर्तृकत्वादिप्रयोजनसिद्ध्यर्थं सधर्मकं विहितम् । तत् चरौ प्रदेयसिद्धेः तद्व्यतिरेकेण जायमानतया चरुत्वावच्छिन्नं प्रति पेषणस्य अकारणत्वात् निवर्तमानं प्रतिप्रसूयते । अत एव प्रसक्त प्रतिषेधस्य कारणान्तरेण निवृत्तिप्रसक्तौ विधिः प्रतिप्रसवः । तत्र चोत्पत्तिविनियोगाद्यन्तरभावो यथासम्भवं विधेर्व्यापाराभावात् लाघवम् । अत एव पेषणस्य प्रदेयसिद्धिरूप प्रकृतप्रयोजनलोपेन अत्र अदृष्टप्रयोजनान्तरकल्पनेऽपि न प्रतिप्रसवत्वविघातः । धर्माणां तु पेषणस्य कर्मान्तरत्वाभावेन 'प्रधानं नीयमानं हि तदङ्गान्यपकर्षति' इति न्यायेन प्राकृतपेषणाङ्गतया प्राप्तानां अनेनादृष्टरूपकार्यान्तरप्रयुक्तत्वकल्पनं न दोषाय । दृश्यते च अयमर्थः अग्निसंस्कारकमन्थनादेः पशुप्रकरणाम्नातस्य वचनात् चातुर्मास्याङ्गत्वेन विनियोगे तद्धर्माणां कार्यान्तरप्रयुक्तत्वकल्पनायाम् । वस्तुतस्तु अत्र पेषणस्य न कार्यान्तरकल्पनाऽपि, प्रदेयसिद्ध्यर्थत्वादेव । यद्यपि हि चरुत्वावच्छिन्नं प्रति पेषणस्याकारणत्वम्, तथापि पिष्टकचरावपि चरुशब्दप्रयोगात् पेषणविधिबलेन च 'पौष्णं चरुम्' इत्यत्र सामान्यवाचिनोऽपि चरुशब्दस्य पिष्टकचरुविशेषपरत्वनिश्चयात्, तस्य च प्रदेयस्य पेषणमन्तरेण असिद्धेर्न पेषणस्य कार्यान्तरकल्पनाऽपि । अत एव चरुर्नाम अनवस्रावितान्तरूष्मपक्वतण्डुलप्रकृतिकद्रव्यम् । अत्र मन्त्र— ब्राह्मणे अवस्रावितेवेति । माण्डकं याज्ञवल्क्ये भक्तमिति । सूपशाकादियाज्ञवल्क्ये तण्डुलेति । अत एव पिष्टकचरावपि तदुपमनाय पेषणस्य विधातव्यमिति तत्रैव पेषणम् ।

मण्डन— 'चरावेव पिपि पौष्णे ।' १९

शङ्कर— 'चरावेव तु सोत्कृष्या ।' इत्य प्रपिष्टता । १९

## पौष्णं पेषणं पूषाद्यदेवत्ये चरौ ॥

एकस्मिन्नेकसंयोगात् । ३।३।१५।३९॥

भाष्यम्— पौष्णं पेषणं विकृतौ भवति चरौ एवे-

स्युक्तम् । अथेदानीं सन्दिह्यते । किं एकदेवत्ये पौष्णे एतत् भवति, उत द्विदेवत्येऽपीति । किं द्विदेवत्ये उदाहरणम् ? राजसूये उत्तरे त्रिषंयुक्ते 'सोमापौष्ण एकादशकपाल., ऐन्द्रापौष्णश्चरुः (पौष्णश्चरु.) श्यामो (मो ?) दक्षिणा' इति । तत्र ऐन्द्रापौष्ण उदाहरणम् । किं प्राप्तम् ? एकदेवत्यस्यैव पेषणमिति, केवलसंयोगात् यथा चतुर्धाकरणे ।

वा— **एकस्मिन्नेकसंयोगात्** ॥ इदानीं किमन्यसहिते पूषणि देवतायां ऐन्द्रापौष्णे चरौ पेषणं भवति, उत एकस्मिन्नेव इति सन्देहे चतुर्धाकरणेन्द्रपीतन्यायात् सिद्धान्तेनैव तावत् उपक्रमते । पूषा इत्येकसंयोगश्रवणात् तथाभूते एवार्थे स्यादिति ।

**धर्मविप्रतिषेधाच्च ॥ ४० ॥**

**भाष्यम्**— द्विदेवत्ये विप्रतिषिध्येत धर्मः । पूष्णः पेषणं नेतरस्य । तत्र यदि पूष्णो भागः पिष्येत, अपिष्ट इतरस्य स्यात् । तत्र विषमः पाको भवेत् । पाकनिमित्तश्च चरुशब्दः, स विप्रतिषिध्येत । अथाविवेकेन मन्यमाना अपरस्यापि भागं पिंष्युः, भागसंमोहः स्यात् । तत्र को दोषः ? अन्यस्य भागोऽन्यस्मै अवदीयेत । तथा अयथाभुतं क्रियेत । तस्मादपि एकदेवत्ये पेषणमिति ।

वा— इतश्चैकदेवत्ये । कुतः ? '**पिष्यादर्धं समस्तं वा द्विदेवत्ये चरौ भयात् । पूर्वस्मिन् पाकवैषम्यं परस्मिन् भागसंकरः ॥**' अर्धपेषणे हि पिष्टोंऽशः शीघ्रतरं सिध्यति, इतरश्चिरेण । तत्र पिष्टपाकानन्तरमुद्वास्यमाने हवि इतरस्य आमत्वं भवेत् । तत्पाकप्रतीक्षणेऽपि वा पिष्टस्य क्लिन्नत्वात् अचरुत्वं स्यात् । पाकवैशद्येन हि पिष्टकणशरपि चरुर्भवति । न चैतदस्मिन् पक्षे भवति । अथ तण्डुलान् पूर्वं प्रक्षिप्य पश्चात् पिष्टं निक्षिपेत्, ततो यौगपद्य गम्यमानं बाध्येत ( पिष्टतण्डुलभागयोर्द्वयोरपि एकयागसाधनत्वेन एकहविष्ट्वात् कृत्स्नस्य च हविषः 'हवींषि श्रपयति' इति युगपच्छ्रपणविधानात् श्रपणार्थनिक्षेपस्यापि यौगपद्यमिह अतिदेशात् गम्यमानं बाध्येत —मु. पृ. १३१९ ) । पूषानुरोधेन तु ऐन्द्रेऽपि भागे पिष्यमाणे भागसंकरात् अन्यदीये भागे अन्यस्मै दीयमाने वैगुण्यं प्राप्नोति । ननु चैतत् सर्वं द्विदेवत्येषु भवतोऽपि समानम् । तथाहि, '**चरौ पशौ पुरोडाशे दीयमाने द्विदैवते । पूर्वं हविष एकत्वाज्जायते भागसंकरः ॥**' स चाङ्गीकृतः, मिश्रस्य हविषो मिश्रदेवतोद्देशेन युगपद्दाने विरोधाभावात् । उच्यते । '**यागापूर्वप्रयुक्तेषु धर्मेष्वेवं भवेदिदम् । भवतः पेषणं त्वेतद्देवताधर्मसंमतम् ॥**' अस्मत्पक्षे पुनः पूषदेवत्ययागापूर्वप्रयुक्तं पेषणम् । न च तत् द्विदेवत्ये तथावस्थितं इत्यप्रवृत्तिरेव । हविरन्तरेष्वपि च द्विदेवत्येषु एवंप्रकारयनेयेति देवता गुणभूता । न च गुणानुरोधेन प्रधानमावर्तनीयमिति सकृद्दानाभ्युपगमात् सर्वस्मिन् सह क्रियमाणे सङ्करदोषानाश्रयणम् । भवता पुनरस्मदभ्युपगमेन द्विदेवत्ये पेषणं पक्षानुगमनप्रयुक्तं अवश्यं देवतानिमित्तत्वमभ्युपगन्तव्यम् । ततश्च देवतयोः प्रधानत्वादेकैका स्वभागमसंकीर्णं प्रार्थयते इति तथैव दानमनुष्ठेयम् । आदितश्चैक एव भागः पेषणार्ह इत्यवधारितम् । ततश्च पक्तिदोषः स्यात् । अथ तण्डुलात्मकोऽपि भागः पाकसाम्यार्थं पिष्यते । तत्र ब्रूमः । यावत्तुल्यभागविवेकं हविः, तावत् कियान् कस्य भागः इत्यनवधारणात् संकरदोषो न जायते । कल्पिते तु विवेके वचनादृते पुनरेकीकरणानुपपत्तेरसंकीर्णदानं प्राप्नोति । तत्रान्यस्य भागात् अन्यस्मै अवदीयमाने वैगुण्यं भवति । पात्रभेदेन पक्ष्यतीति चेन्न । चरुमिति याग प्रति उपादीयमानत्वेन विवक्षितैकत्वस्य पात्रकृतभेदाश्रयणे शास्त्रबाधप्रसङ्गात् । अतो न कथञ्चिदपि प्रतिषिद्धधर्मके द्विदेवत्ये पेषणं भवतीति न कर्तव्यम् ।

**अपि वा, सद्वितीये स्यात् देवतानिमित्तत्वात् ॥ ४१ ॥**

**भाष्यम्**—देवतानिमित्तमेतत् पेषणं श्रूयते । पूषा प्रपिष्टभागः कर्तव्य इति । स च द्विदेवत्येऽपि भागे पिष्यमाणे प्रपिष्टभागः कृतो भवति । ■ यथा चतुर्धाकरणे । तत्र हि तद्धितो निरपेक्षस्य भवति, न सद्वितीयस्य । इन्द्रपीत इति समासोऽपि निरपेक्षस्य, न सद्वितीयस्य । इह तु प्रपिष्टशब्दस्य भागशब्देन सह अन्यपदार्थो बहुव्रीहिः समासः । एषोऽपि समर्थयोरेव,

न तु अत्र द्विदेवत्ये कश्चिदेवंजातीयको दोषः। तस्मादेकदेवत्ये द्विदेवत्येऽपि वा चरौ अस्य भागः पेष्टव्य एव।

वा — सद्वितीयेऽपि वा पूषणि स्यादेव पेषणम्। कुतः? '**हविषो यदि पौष्णस्य तद्यागाङ्गस्य वा भवेत्। अनुक्तत्वाद् द्विदेवत्ये न भवेत् पेषणं ततः॥**' पूषभागनिमित्तमेतत् पेषणं न च तत् विशेषितवस्तुनिमित्तम्। व्यासङ्गित्वाच्च [ व्यासज्यवृत्तित्वाच्च ] देवतात्वस्य द्विदेवत्ये पूषनिमित्तता न स्यात्, न तु पूषा तद्भागो वा नास्तीति। यथा मनोतायां वक्ष्यति (भाष्यं पृ. १९३९) 'तत्राग्निः अदेवता, न तु असमवेतः' इति। तेन असत्यपि अत्र पूष्णो देवतात्वे समवायमात्रेण उभयोपकारात् द्वयोर्देवेनापि च तत्र मानस्य 'सम स्यादश्रुतत्वात्' इत्यनेन न्यायेन अर्धं पूष्णो भाग इति गम्यते। तस्य पेषणे क्रियमाणे यदि तावत् कारत्स्न्यन्यायेन भागान्तरेऽपि हस्तेन इतरभागपेषणमपि क्रियते, तथापि न किञ्चित् दुष्यति। अथापि क्लिमितेन अश्रुतेन कृतेन हस्तेन अर्धमात्रपेषणमेव अध्यवसीयते, तथापि केन चित् कौशलेन पाकसंपादनात्, युगपद्विशेषस्यानेकरूपोर्वा गुणत्वात् परं बाधः। इति निरूप्य ( पाके दोषाभावमुपपाद्येत्यर्थः ) क्रमेण पेषणमिति। अथ यदुक्तं चतुर्थकरणेऽस्पष्टमिति, तदभिधीयते। '**समासतद्धितोत्पत्तिर्नासमर्थपदाश्रया। असमर्थत्वमेकस्य द्विदेवत्येषु चेष्यते॥**' तेन आग्नेये प्रत्ययाभ्यां समर्थाभ्यामिन्द्रादिभ्यां द्विदेवत्यग्रहणं युक्तम्। इह पुनः पूषशब्दस्य असमासमात्रकरणात् प्रतिष्ठमागमव्योश्च कार्येऽपि पूषणि सामर्थ्यविघातात् न किञ्चित् दुष्यतीत्युपलक्ष्यता।

लिङ्गदर्शनाच्च ।४२॥

भाष्यम्— लिङ्गमप्येवं भवति, 'तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि' इति, देवतानिमित्तं पेषणमिति स्तुतिर्दर्शयति। तथा 'सौम्यापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकामः' इति नेमपिष्टतां दर्शयति। तथा 'अर्धं पिष्टमर्धमपिष्टं भवति द्विदेवत्यत्वाय' इति देवतानिमित्तमेव पेषणं दर्शयति।

वा— 'अदन्तको हि' इति हेतुर्देवताधर्मत्वं दर्शयति। न च सद्वितीयस्य पूष्णो दन्ता जायन्ते इति हेतुसाम्यात् युक्तं पेषणम्। तथा च सौमापौष्णे नेमपिष्टतानुवादः अन्यत्र च द्विदेवत्ये 'अर्धं पिष्टमर्धमपिष्टं द्विदेवत्यत्वाय' इति देवताधर्मत्वदर्शनमवकल्पिष्यते।

**वचनात् सर्वपेषणम्, तं प्रति शास्त्रवत्त्वादर्थाभावाद्धि चरावपेषणं भवति ।४३॥**

**भाष्यम्**— इदं पदोत्तरं सूत्रम्, नेमपिष्टं भवतीति कस्मादेतत्र वचनमिति। उच्यते। यदि वचनमेतद्भवेत्, सौमापौष्णमाम्नाय सर्वत्र पेषणं विदध्यात् चरौ पशौ पुरोडाशे च। तत्र सौमापौष्णस्य चरुसम्बन्धे नेमपिष्टसंबन्धे च उभयस्मिन् विधीयमाने वाक्यं भिद्येत। तस्मात् योऽयः सौमापौष्णः तत्रतत्र नेमपिष्टता। तं प्रति सौमापौष्णमात्रं प्रति शास्त्रवत्त्वं अर्धपेषणस्य। पुरोडाशे अर्थात् सर्वपेषणे प्राप्ते अर्थाभावाच्च पशौ चरौ वा अपेषणे प्राप्ते वचनमिदं भवेत्। तत्र चरुशब्दो न विवक्षितस्वार्थः स्यात्। प्रदर्शनार्थः कल्प्येत। पेषणानुवादपक्षे पुनर्नैव विरोधो भवति। तस्मात् भवत्येव लिङ्गम्। ननु आम्नानसामर्थ्यात् पशोरपेषणम्। नेति ब्रूमः। अर्धपेषणे नाम्नानाः, अपिष्टाद्याम्नायते। पेषणं चाऽसमर्थम्।

वा— विधित्वात् नेमपिष्टत्वमलिङ्गं विपर्ययसाधनं च इत्यत आह ( भाष्यम् ) 'यदि एतत् वचनं भवेत्' ततः अनेकार्थविध्यसम्भवात् नेमपिष्टत्वं विधीयमानं चरुं वा उद्दिश्य विधीयेत सौमापौष्णं वा। तत्र य एव उद्दिष्टः तस्यैव इतरेण विशेष्टुमशक्यत्वात् सार्वत्रिकत्वप्रतीतेः सर्वपेषणं प्राप्नोति। तत्र अन्यतरदानर्थक्यप्रसङ्गः। तत् यदि तावत् 'चरुः, स नेमपिष्टः' इति विधीयते, ततः सर्वचरुविषयत्वावधारणे सति सौमापौष्णशब्दः एकदेशानुवादः अनर्थकः स्यात्। अथ सौमापौष्णमनूद्यते, ततोऽपि सर्वपेषणमेव, तदेकहविर्भेदादर्शनात् पशुपुरोडाशयोरपि प्रसङ्गः। ततश्च पूर्ववत् चरुशब्दानर्थक्यप्रसङ्गः। तं प्रति हि सौमापौष्णमविशेषितं प्रति पेषणस्य शास्त्रवत्त्वविशेषणार्थमादरः।

एतस्मिन् पक्षे चरौ अपेषणं भवति । ननु अर्थप्राप्तत्वात् पुरोडाशस्य अवदानं पशोश्च अर्थविप्रतिषेधात् इत्युक्तम् [ 'चरौ वा, अर्थोक्ते पुरोडाशे, अर्थविप्रतिषेधात् पशौ न स्यात्' ( पेषणं ) इति ३।३।१४।३६ सूत्रे ] इति चेत्, न, अत्र तयोरुभयोरपि अप्रसङ्गात् । सर्वपेषणे हि प्राप्ते पुरोडाशस्य अर्थपेषणं विधीयते, तावतापि च कथञ्चित् पुरोडाशो निष्पद्येत । इदम्पदीनामपि उत्पादद्देवौऽदेवाङ्गं पिष्टभागाना नार्थविप्रतिषेधो भवति । न चाल्पत्वादरतिर्भवेत् । न चोत्पाददेवाभेदः स्यात् । इतरेषामुदेवस्य भ्रष्टत्वेन च पिष्टोऽपि सन् पूषभाग उपलभ्यते, न सर्वपेषणप्रमुखेन । अथवा अस्मिन् पक्षे वाचनिकत्वाददृष्टार्थे पेषणे सति अपिष्टादेवानदीयेत । न हि तदैतत् देवतानिमित्तं पेषणं स्यात् । तस्मात् सार्वनिकत्वप्रसङ्गाच्च परिशेषसिद्ध चरोः पेषणमिति तच्छुतिरनर्थिका प्राप्नोत्येवेति चरुदेवतासम्बन्धनिधिपरे वाक्ये वैमपिष्टत्वमनूद्यते इत्यनन्यमभ्युपगन्तव्यम् । अतश्च लिङ्गसिद्धिः ।

एकस्मिन् पाऽर्थधर्मत्वादैन्द्राग्नवदुभयोर्न स्याच्चोदितत्वात् । ४४ ॥

भाष्यम्-- एकदेवत्ये वा पौष्णं पेषणं भवितुमर्हति, नैन्द्रापौष्णे । कुतः ? नैव देवताधर्मो विधीयते, पूष्णो भागः पिष्ट उपवोक्तव्य इति । कस्य तर्हि ? अर्थस्य धर्मः । कः पुनरर्थः ? याग. । कथमवगम्यते न देवताधर्म इति ? उच्यते । न हि तस्या भागोऽस्ति । ननु यद् देवतायै दीयते, तत् तस्या भागो भवति । उच्यते । एतद्धि देवतामुद्दिश्य त्यज्यते । न च त्यागमात्रेण देवतास्वत्वं भवति । परिग्रहणेन हि स्वस्वामिसम्बन्ध आपद्यते । न च परिगृहीत देवतयेति किञ्चन प्रमाणमस्ति । यद्य यं भजते, स तस्य भागः । न च हविर्देवता भजते । तस्मान्नास्ति पूष्णो भाग. । अथापि कथञ्चिद्भवेत् भाग., तथापि न देवताया धर्मः पेषणं भवितुमर्हति । निष्प्रयोजनो हि तथा स्यात्, अयागधर्मत्वात् । कथं तर्हि प्रकरणान्तरे समाम्नातो यागधर्मो भविष्यतीति । उच्यते । वाक्यसंयोगात् । ननु च देवतयैव संयोग. श्रूयते, न यागेनेति । उच्यते । भागाभावादनर्थकत्वाच्च न देवतासंयोग इत्युक्तम् । तथापि तु यथा यागसम्बन्धो भवति, तथा वक्तव्यम् । तदुच्यते । अयमत्र पूष्णो भागो य. पूषणमुद्दिश्य त्यज्यते । यस्य द्रव्यस्य त्यागे पूषा देवता । न चैन्द्रापौष्णे भवति पूषा देवता, न स चरुः पूष्ण. स्वत्वेन सम्बध्यते । तस्मादैन्द्रापौष्णे न कश्चिदस्ति पूषभागः सम्बन्धः । केवले तु पूषणि देवताभूते तस्मै सङ्कल्पितो भागो भवति । कथम् ? यमुद्दिश्य सङ्कल्पो भवति, स तस्य भाग इति प्रसिद्धिरेषा । तेन यद्यपि पूषा संनोच्चारणेन इन्द्रापूष्णोरुपकारकमुच्चारणं कुर्वन्नुपकारको भवेत्, तथापि न तस्य द्विदेवत्यो भाग इत्युच्यते, असङ्कल्पनात् । केवले पूषणि देवताया चरोः पेषणं क्रियते, नैन्द्रापौष्णेषु द्विदेवत्येष्विति ।

वा-- एकस्मिन्नेव पूषणि देवतायामेतत् पेषणं भवेत्र सद्वितीये । 'न ह्येष देवताधर्मो न तद्भागस्य गम्यते । पूषदेवत्ययागार्थं धर्मस्त्वेष प्रतीयते ॥' न तावद्देवताया भागोऽस्ति यस्यैष धर्मः कल्प्येत । नहि तदुद्देशत्यागमात्रेण भागो भवति । किं तर्हि ? परिग्रहेण । कर्मसाधनो हि भागशब्दः । भज्यत इति भागः सेव्यते इत्यर्थः । तेन यं यो भजते, स तस्य भाग. । न च हविरसं देवता भजते । ओमृत्वस्य नवमे निषेधात् । अथापि भवेत् तथापि तस्याः प्रयोजकत्वं तत्रैव निराकरिष्यते । तेन देवतावत् भागधर्मत्वानुपपत्तेर्यागद्वारा अपूर्वधर्म एवाय नवमाद्यन्यायेन देवताधिकरणन्यायेन च विज्ञायते । भाष्यकारेण तु देवताधर्मत्वनिराकरणपरेण यागधर्मत्वमभिहितमिति द्रष्टव्यम् । 'कथं तर्हि प्रकरणान्तरे समाम्नातो यागधर्मो भविष्यति' इति वाक्यसंयोगस्य देवताविषयत्वात् प्रकरणेन च विना अपूर्वसाधनत्वानुपपत्तेर्न कथञ्चिद्यागेनापूर्वेण वा संबन्ध. इति मन्यमानस्य प्रश्न । तत्र 'वाक्यसंयोगात्' इत्युक्ते परेण स्वामिप्रत्ये विज्ञाते भागशब्देनैव मुख्यार्थासंभवात् यागोऽपदानमिति दर्शयति । परस्वत्वीकरणात्मकस्य भागस्याच अविद्यमानत्वात् यदुद्देशेन स्वत्वनाशनमात्मीयो क्रियते, तेन यागो लक्ष्यते । स चैकदेवत्ये पूषविशिष्टो भवतीति तद्यागस्य देवो पदमे । द्विदेवत्ये पुनर्व्यतिरिक्तो विभः

सकलो ऽन्यतरेण व्यपदेष्टुमशक्य इति । यथैव ऐन्द्राग्नस्य पुरोडाशस्य ग्रहस्य च आग्नेयेन्द्रपीतशब्दाभ्यामग्रहणम्, तथैन्द्रापौष्णादेः पूषभागत्वेन । यद्यपि च एतन्निषशब्दोच्चारणादिह समासोपालम्भो नास्ति, तथाप्ययं एव भागशब्दप्राप्तो न विद्यते इत्यसङ्गतिः । यद्यपि च द्वयोरर्थयोर्देवतात्वं प्रतिपद्यमानयोः समुदायप्रसिद्ध्यर्थत्वेन अन्वयी उपयुज्येते, तथापि सकलस्य अन्यतरेणाव्यपदेश्यादनुपलक्षणत्वं सिद्धम् ।

हेतुमात्रमदन्तत्वम् । ४५ ॥

भाष्यम्—यदुक्तम्, अदन्तको हीति देवताधर्मं दर्शयतीति । अर्थवाद एव इतरस्मिन्नपि पक्षे उपपद्यते ।

वा—ननु 'अदन्तको हि' इति हेतुनिदर्शनात् देवताधर्मत्वमिति । तत्रोच्यते । हेतुवन्निगदार्थवादत्वादस्य यागधर्मप्रशंसार्थत्वस्यापि अविरुद्धमित्यवगन्तव्यम् ।

वचनं परम् । ४६ ॥

भाष्यम्—अथापर यत्कारणमुक्तम्, नेमपिष्टमिति द्विदेवत्ये पेषणं दर्शयति, 'अर्धं पिष्टं भवत्यर्धमपिष्टं द्विदेवत्यत्वाय' इति देवताधर्मं दर्शयतीति । अत्रोच्यते । एवं सति वचनमिदमप्राप्ते भवतीति । ननु अनेकार्थविधानमेकं वाक्यं प्राप्नोति । उच्यते । सति पक्षान्तरे अनेकार्थविधिः पक्षान्तराश्रयणेन परिह्रियते । असति पुनः पक्षान्तरे वचनानर्थक्यप्रसङ्गपरिजिहीर्षया अनेकार्थं वाक्यमभ्युपगन्तव्यं भवति । तस्माद् द्विदेवत्ये पेषणमिति सिद्धम् ।

वा—नेमपिष्टादिषु प्राप्त्यभावाद्वचनं भविष्यति । विशिष्टविधानाच्च वाक्यभेदाभावः । अश्वेकपालक्षीराभ्यां च पदस्तयनिरमाद्दर्शनविषयत्वम् । अविशिष्टविधिं चापेक्ष्य विशिष्टविधिर्दुर्बलो भवति न तु अत्रासावस्ति । तस्मादविरुद्धमित्येकदेवताविषयत्वमिति ।

शा—'पक्षप्रकरणाभावाद् वाक्ये चाश्रवणादिदम् । पेषणं देवताधर्मो नापूर्वस्यान्यधर्मवत् ॥ तत् स्वरूपप्रयुक्तं सद् द्विदेवत्येऽपि विद्यते ॥' इति प्राप्ते, अभिधीयते । 'देवता निष्फलत्वान्नैव पेषणस्य प्रयोजिका । उपादानं च यागस्य भागशब्देन विद्यते ॥ मुख्यार्थासंभवाद् यागलिङ्गविरयाऽत्र हि । श्रूयते भागशब्दोऽयं नानुपादानमस्त्यतः ॥'

वि—'द्विदेवकेऽपि किं पिष्टमुत पूषैकदेवके । द्विदेवकेऽपि तत् पूष्णः सत्वात् पेषणभागिनः ॥ देवता निष्फलत्वेन पेषणं न प्रयोजयेत् । यागस्य तत्र भागोक्तेर्न यागान्तरगामि तत् ॥' २० तत्र पेषणप्रयोजकत्वे ।

भाट्ट—यत्र अन्यसहितः पूषा देवता यथा राजसूये 'ऐन्द्रापौष्णश्चरुः' इति तत्रापि पेषणम्, उत यत्र केवल एव देवता तत्रैव इति चिन्तायाम्, 'अदन्तको हि सः' इत्यर्थवादानुसारात् पेषणस्य पूषस्वरूपप्रयुक्तत्वावगतेः, तत्स्वरूपस्य च अन्यसहितेऽपि सत्त्वात् युक्तमेव पेषणम् । अत एव 'सोमापौष्णं चरुं निर्वपेन्नेमपिष्टं पशुकामः' इति नेमपदस्यार्धपिष्टत्वानुवादोऽपि सङ्गच्छते । यदि तु नवमाद्यन्यायेन पूषस्वरूपे आनर्थक्यात् अपूर्वसाधनत्वलक्षणाया आवश्यकत्वमाशङ्क्येत, तदाऽस्तु पूर्वोक्तविधया पूषप्रपिष्टसम्बन्धज्ञानजन्ययागानुमितैव अपूर्वसाधिकायाः सत्त्वात् साऽपि पूषपदे । परन्तु अर्थवादानुरोधात् पूषाधिष्ठानकदेवताप्रयोज्यापूर्वीयत्वलक्षणाया एवाङ्गीकारात् द्विदेवत्येऽपि पेषणमर्थस्य । यथा चैवं सति पात्रमपि विस्तार्य यतितव्यं अन्तरायकरणेन वा क्रमिकनिक्षेपेण वा पात्रभेदेन वा । इति प्राप्ते, आनर्थक्यपरिहाराय अपूर्वसाधनत्वलक्षणाया आवश्यकत्वात्, अभिधानद्वारकत्वकल्पनस्य च पूष्णो देवतात्वोपस्थितिमन्तरेणानुपपत्तेः, तदुपस्थितौ च तद्द्वारकत्वमात्रकल्पनयैव आनर्थक्यपरिहारात्, द्विदेवत्ये च चतुर्थीकरणाधिकरणन्यायेन केवलस्य पूष्णो देवतात्वाभावात्, यत्र केवल एव पूषा तत्रैव पेषणम् । न च अपूर्वसाधनीभूतदेवतात्वस्यैव प्रकारतया पूषपदेन लक्षणेऽपि तस्य पूषोपरि भाने स्वरूपसम्बन्धस्यैव संसर्गविधया विवक्षणेन पर्याप्तिविवक्षणात्, तस्य च द्विदेवत्येऽपि एकस्मिन् पूष्णि सत्त्वेन तस्याप्युद्देश्यत्वोपपत्तेः कथं न पेषणमिति वाच्यम् । व्यासज्यवृत्तिधर्मप्रकारतायां एकमात्रवृत्तिसम्बन्धस्य संसर्गत्वानुपपत्तेः । अन्यथा एको द्वित्ववान् इतिवत् 'एको द्वित्ववान्' 'एको द्वौ' इत्यादिशाब्दबोधापत्तेः । अतो व्यासज्यवृत्तिदेवतात्वस्य पर्याप्तिसम्बन्धे-

नेव प्रकारत्वात्, तस्य च पूष्णि पेयत्वे ग्रापात्, पूषमात्रभुक्तिदेवतात्मस्यैव प्रकारत्वेन तत्रैव पेषणादि। अदन्तकत्वं तु अर्थवादमात्रत्वात् विरुध्यते। नैमपिष्ट-दम्यापि च तत्रैव विधेयत्वाङ्गीकारात् विशिष्टमात्रता-विधानेन अनावश्यभेदात् अगमकत्वम्।

मण्डन— 'ऐन्द्रापौष्णेऽस्ति पेषणम्।' २०.

शंकर— 'नैन्द्रापौष्णे तु सा मता।' सा प्रपिष्टता। २०.

• पौष्णं पेषणं प्रकृतौ श्रूयमाणमपि विकृतौ। ३।३।१३।३४.

⁂ पौष्णं पेषणं विकृतौ प्रतीयेताचोदना-त्प्रकृतौ। ३।३।१३।३४॥

दर्शपूर्णमासयोः समामनन्ति 'तस्मात्पूषा प्रपिष्टभागो-ऽदन्तको हि सः' इति। तत्र संदेहः किं पौष्णं पेषणं प्रकृतौ उत विकृतौ इति। अयं च विचारः पूर्वोक्त-संतर्दनन्यायेनैव गतार्थः। यतो न हि दर्शपूर्णमासयोः पूषा नाम देवता समस्ति। न च ऋचा दर्शपूर्ण-मासदेवताऽनेन प्रतिपाद्यते, 'अदन्तको हि' इति हेतु-वन्निगदत्वमवायात्। न सम्पादितमदन्तकत्वं वेदे पुराणे वा कस्यचित्प्रतीतम्। पूष्णस्त्वदन्तकत्वं वेदे पुराणे च प्रसिद्धम्। अस्ति च विकृतौ तस्य तस्य हविषः पूषा देवता। अतोऽर्थप्राप्तत्वेन वाक्यबलेन पेषण-मुच्यते। तदयं पूर्वन्यायसिद्धोऽप्ययं उत्तरविचारार्थं कीर्त्यते इति मन्तव्यम्। सूत्रं तु पूर्वपक्षनिषेधपरं सिद्धान्तपरम्। प्रकृतौ तस्याचोदना अविधान-मित्यर्थः। शौभा.

⁂ पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात् प्रकृतौ। ३।३।१३।३४॥

दर्शपूर्णमासप्रकरणे 'तस्मात् पूषा प्रपिष्टभागोऽदन्तको हि सः' इति पौष्णं पूषदेवताकं पेषणमभिहितम्। तत् पूषदेवताकविकृतौ कर्तव्यम्। विकृतौ उत्कर्षः। प्रकृतौ पूष्णः अचोदनात् चोदनाभावात्। के.

• पौष्ण. देवता ऐकादशिनेषु चतुर्थः पशुः पर्यग्नौ ऐन्द्रपौष्णे च। वि. ८।१।७, • 'पौष्णं स्वसमभवे दत्तवतः' इत्यस्य पशोः पुरोडाशे

'पूषा प्रपिष्टभागोऽदन्तको हि' इति पौष्णं पेषणं कर्तव्यम्। ३।३।१९.

⁂ पौष्णपेषणाधिकरणम्। दर्शपूर्णमासप्रकरणे श्रुतस्य पौष्णपेषणस्य पौष्णे यागे उत्कर्षः॥

पौष्णं पेषणं विकृतौ प्रतीयेताचोदनात् प्रकृतौ। ३।३।१३।३४॥

भाष्यम्— दर्शपूर्णमासयोः समामनन्ति 'तस्मा-त्पूषा प्रपिष्टभागोऽदन्तको हि सः' इति। तत्र संदेहः किं पौष्णं पेषणं प्रकृतौ, उत विकृताविति। किं प्राप्तम्? प्रकृताविति। कुतः? प्रकरणात्। ननु प्रकृतौ पूषा न कस्यचिद्धविषो देवता समामनन्तीति। उच्यते। प्रकृतौ [illegible] विदेवतां पूषशब्दो वक्ष्यति। एवं प्राप्ते, ब्रूमः। यत्र पौष्णं हविरस्ति, तत्र तस्य पेषणं विधातुं शक्यम्। न च प्रकृतौ पूषाऽस्ति। तस्मादुत्कष्टव्यं पेषणमिति। ननूक्तं का विदेवतां पूषशब्दो वक्ष्यतीति। ब्रूयात् यदि अन्यथापि मुख्यः पूषा न स्यात्। तत्तन्मन्त्र विनियोगे प्रकरणमुपलभ्येत। उपलभ्यताम्। वाक्यं हि अन्योप-रोधकम्। अथवा नैवात्र संदेहः। एवमेव प्राप्तमुच्यते। पौष्णं पेषणं विकृतौ न प्रकृताविति। नास्ति पूषा प्रकृतौ चोदनेति। किमर्थं प्राप्तमुच्यते। उत्तरस्य कथा वर्तिष्यते।

वा— संतर्दनादिन्यायेनैव वाक्यप्रकरणविरोधे इति विद्यमानत्वे सिद्धमुत्तरविचारार्थं प्रारभ्यते।

सोम— प्रकरणनुसारेण दर्शपूर्णमासयोर्निवेशः इति पूर्वपक्षस्य मन्दत्वात् भेदनाधिकरणान्तरम्, किन्तु कि सर्वत्र निवेशः, उत क्वचिदेव इति करिष्यमाणविचारस्य वाक्यप्रकरणविरोधाविरोधविचारप्रारम्भे साक्षादसंगततया भावात् तस्य प्रमाद्धिकारसिद्ध्यर्थं पेषणस्य वाक्येनोत्कर्षः इति प्रासङ्गिकत्वेन सूत्रं क्रियते।

वि— 'प्रपिष्टभागः पूषेति प्रकृतौ विकृतावुत।, हविष्करणदेव प्रकृत्यामिति युज्यते॥, संतर्दनादिवत् वाक्यात् विकृतौ पूषदेवतात्। विदन्त्य पुनरप्युक्ति रधिकस्य विचारणा॥' १८.

भाट्ट— दर्शपूर्णमासप्रकरणे 'पूषा प्रपिष्टभागो-ऽदन्तको हि सः' इति श्रुतम्। तत्र किं दर्शपूर्णमासयो-रेव प्रकृतेन कर्तव्यमिति, उत पूषदेवत्ये पेष-

मात्रविधि' इति चिन्तायाम्, न तावत् भागशब्दलक्षित-यागोद्देशेन पेषणविधिः, एकप्रसरताभङ्गापत्तेः, पूषपदेन विशेषणे वाक्यभेदाच्च, कर्मान्यथार्थद्रव्योपसर्जनस्य पेषणस्य यागान्वयानुपपत्तेश्च। अत एव न पूषपदमेव वाक्यार्थस्य लक्षितपूषदेवत्यागस्य चोद्देश्यतापरम्, पूष्णः अन्यमित्ररितरनुवर्तकस्याभावेन क्रतूपस्थितौ प्रमाणाभावाच्च। अतो गुणात् द्रव्यदेवताविशिष्टकर्मान्तरविधिरेवायम्। इति प्राप्ते, प्रपिष्टभागपदेन तावत् भागो भजनीय सेवनस्येति व्युत्पत्त्या सेवनासम्भवेऽपि संकल्पमात्र देवत्वादिव्यवहारप्रमाणकं प्रपिष्टपूष्णः प्रतीयते। तच्च यागं विना अनुपपन्नमिति यागमनुमापयति इत्येतावत् उभयोरविवादम्। तत्र च विशेषणमात्रविधिसंभवे विशिष्टविध्यर्थकल्पनस्य अन्याय्यत्वात् प्रमाणाभावेन न अपूर्वयागान्तरानुमितिः इत्यपि मध्यमनोऽनवगतमेव। अतश्चानुमीयमाने यागे अनुमापकपूषसम्बन्धेन प्रसिद्धपूषदेवत्यागस्योपस्थितिरपि सुलभैव। अतश्च याग निर्णयानुमितेरेव तात्पर्यग्राहकत्वात् पूषपद विजातीयपूर्वसाधनीभूतपूषदेवतापरम्। तदुद्देशेनैव च स्वसम्बन्धयागप्रदेयद्रव्यप्रकृतित्वसम्बन्धेन प्रपिष्टद्रव्यत्व प्रपिष्टभागसमासार्थो विधीयते। सम्भवति च द्रव्योद्देशेन देवताविधिवत् देवतोद्देशेनापि निरूपकसंबन्धेन द्रव्यविधिर्विशेषणमात्रविधिरूपः। यद्यपि च प्रकृतिद्रव्यस्यापि अनिर्देशेन सम्बन्धासिद्धता, तथापि तत्र पूर्वं विधानाङ्गीकारात् सम्बन्धलाभसम्भवादर्थात्सिद्धेः। पेषणमात्रविधिश्च फलमिति गुणाद्विप्रमाणभावाच्च कर्मान्तरता। एतेन पूषपदेन तद्देवत्यकर्मलक्षणया तदुद्देशेन प्रपिष्टभागपदलक्षितपेषणविधिरिति प्रकारोऽपि निरस्तः यचधिकरणन्यायेन लक्षणापेक्षया कर्मान्तरनिर्देशस्य न्याय्यत्वात् 'वषट्कर्तुः प्रथमभक्षः' इत्यादौ अतिप्रसङ्गापत्तेश्च उपेक्षित। तत्र अस्मदुक्तप्रकारेण भक्षस्य प्रयाजविधिनैव प्राप्तत्वेन तत्र पूर्वप्रवृत्तनीत्यानुपपत्तेरप्रसङ्गी। तदेतत्सर्वं सिद्धमेवोत्तरनिश्चय स्मार्यते इति प्राप्तः।

मण्डन–'विकृतौ पौष्णपेषणम्।' १८.

शंकर–'पूष्णस्तृप्त्या प्रतिष्ठता।' १८.

* पौष्ण–सावित्र–सारस्वत–द्यावापृथिवीयान्यनु-मन्त्रणानि ( दर्शपूर्णमासप्रकरणात् तत्तद्देवत्ये कर्मणि ) उत्कृष्यन्ते। भा. ९।३।५।१९.

* 'प्रास्मै' इत्यस्य अग्निगुणपदस्य न विकारो यत्र अग्नीषोमीयः सवनीयाश्च समानविधानाः। ९।३।८।२३. * 'प्रोद्गातॄणाम्' इत्यत्र विभक्तिस्वारस्याय प्रातिपदिकस्यान्यथानयनम्। न च षष्ठीबहुवचनस्य प्रथमैकवचनवत् अन्वनाविधानेन तस्यान्यथानयनमसम्भवीति बहुवचनानुसारेण प्रातिपदिकस्य प्रस्तोत्रादिच्छन्दोगेषु लक्षणा आश्रिता इति वाच्यम्। 'सक्तून् जुहोति' इत्यनेन अन्यत्र नयनस्य सम्भावितत्वात्। अद्वैत. २।२१ (३०)। ३७. * 'प्रैतु होतुश्चमसः प्र ब्रह्मणः प्रोद्गातॄणां प्र यजमानस्य' अयं मन्त्रः गुणसूत्रद्वयनिधिः। बाल. पृ. ६४. * 'प्र णो देवी सरस्वती' इत्यादिना होत्रकाण्डे चित्रयागीयचतुर्थपञ्चमहविषोः सारस्वतयोर्मध्ये स्त्रीदेवस्य याज्यानुवाक्ये प्रथमतः पठिते, ततः पुंदेवत्यस्य 'पीपिवांसं सरस्वतः' इत्यादिना। वि ५।१।७.

* 'प्र वो वाजा अभिद्यवः' इति ऋक् दर्शपूर्णमासयोः सामिधेनीषु प्रथमा। क्वचिद् विकृतौ तु अन्याऽपि प्रथमा। यदा सा प्रथमा सैव निर्वक्तव्या। ( उपसदिष्टौ 'उपसद्याय मीळ्हुषे' (ऋग्. ७।१५।१) इति तिस्र एकैका त्रिरनुवाने ताः सामिधेन्यः' (आश्वश्रौ. ४।८) अत्र 'उपसद्याय' इत्येषा प्रथमा। महापितृयज्ञे तु 'उशन्तस्त्वा' इत्येकैव सामिधेनी।)। वि. ९।१।१०.

* प्र–शब्दः प्रकर्षे सिद्धः। भा. १।१।८।२१.

* प्रउगं नाम शस्त्रं होत्रा शंसनीयम्। अग्निष्टोमे प्रातःसवने बहिष्पवमानोत्तरं ऋतुयाजोत्तरं आज्यशस्त्रमध्यान्तमनुष्ठाय ततः परं प्रउगं शस्यते। के. * 'प्रउगं शंसति' इति शस्त्रं प्रधानकर्म, न गुणकर्म। स्तुतशस्त्राधिकरणम्। २।१।५।१३–२९.

* 'प्रउगचितं चिन्वीत पशुकामः' इति श्रुतम्। चयनविशेषोऽयम्। अत्र प्रउगं नाम शकटस्य वक्रद्वयम्। यत् एकतः चक्रद्वयच्छिद्रप्रकाठमयन्धेहमत्रान्तराग्रदण्डमध्ये बध्यते, आरतश्च युगमध्ये बध्यते।

एतादृशप्रयुगाकारं चयनं प्रउगचितम् । तच्च द्विविधं एकतः प्रउगचितं उभयतः प्रउगचितं चेति । के.

• प्रकरणमपि विनियोगे प्रमाणम् । ३।३।४।११. • प्रकरणं व्यभिधीयमाना आकाङ्क्षा, आकाङ्क्षावती वा भावना । भा. ३।३।७।१४ पृ. ८५२. • प्रकरणं अवान्तरसंदंशोद्भूतिकमेव । तच्च प्रकृतेर्नास्त्येव । प्रकृत्यङ्गस्य तु भवति यथा प्रयाजानामभिक्रमे । बाल. पृ. ११. • प्रकरणं उभयाकाङ्क्षा ( फलाकाङ्क्षाविशिष्टकथंभावाकाङ्क्षा । वैशिष्ट्यं च स्वाश्रयसाधनाभिहितभावनाऽऽश्रितत्वसंबन्धेन, न तु एकपुरुषप्रयत्नत्वादिना । उक्तसंबन्धेन यदीयफलाकाङ्क्षाविशिष्टा अनिर्णीतफलान्तरान्वया या कथंभावाकाङ्क्षा, सा तद्विनियोजकं प्रकरणं इति तु निष्कर्षः ) यथा प्रयाजादिषु । तदिदं प्रकरणं क्रियाया एव विनियोजकं न द्रव्यगुणयोः । तयोस्तु क्रियायोगात् विनियोजकम् । मीन्या. पृ. १६६, १७२. • प्रकरणं कथंभावात्मकं क्रतुधर्ममपेक्षमाणं पुरुषधर्मे विधीयमाने अत्यन्तं बाधितं भवति । भा. २।४।१।१. • प्रकरणं यत् 'अस्य इतिकर्तव्यता' इत्याकाङ्क्षस्य वचनम् । आरम्भो हि स इत्थंभूतः वचनक्रियायाः । स एव विध्यादिः विधानान्तापेक्षः । भा. ३।३।७।१४ पृ. ८५१, • प्रकरणं क्रमात् बलीयः । तेन विदेवनादयो न अभिषेचनीयाङ्गम् । अभिषेचनीयस्य तु मध्ये स्थानं विदेवनादीनाम् । ४।४।२।८. • प्रकरणं क्रमापेक्षया प्रबलम् । 'अक्षैर्दीव्यति' 'राजन्यं जिनाति' 'शौनःशेपमाख्यापयति' एतेषां राजसूयाङ्गत्वम् । न तु अभिषेचनीयाङ्गत्वम् । वि. ३।३।१०.

¶ प्रकरणं तु पौर्णमास्यां रूपावचनात् । २।२।३।६ ॥

एवं समामनन्ति 'यदाग्नेयोऽष्टाकपालोऽमावास्यायां च पौर्णमास्यां चाच्युतो भवति' 'तावब्रूतामग्नीषोमावाज्यस्यैव नावुपांशु पौर्णमास्यां यजन्निति' 'ताभ्यामेतमग्नीषोमीयमेकादशकपालं पूर्णमासे प्रायच्छत्' 'ऐन्द्रं दध्यमावास्यायाम्, ऐन्द्रं पयोऽमावास्यायाम्' इति । तथा 'आघारमाघारयति' 'आज्यभागौ यजति' 'स्विष्टकृते समवद्यति' 'पत्नीः संयाजयति' 'समिष्टयजूंषि जुहोति' 'य एवं विद्वान् पौर्णमासीं यजते' 'य एवं विद्वानमावास्यां यजते' इति । तत्र संदेहः किं सर्वाण्येतानि समप्रधानानि, उताग्नेयादीनि पयोऽन्तानि प्रधानानि, आघारादीनि उपकारकाङ्गानि । तथा 'य एवं विद्वान्' इत्येवं प्रयुक्तौ प्रकृतानां कर्मणामनुवदितारौ, अथवा पूर्वयोः कर्मणोर्विधातारौ, तदितरे गुणविधय इति । पूर्वाधिकरणेन अभ्यासतो भेदमभिधाय इदानीं तदपवादः क्रियते । अत्र 'य एवं विद्वान् पौर्णमासीं यजते, य एवं विद्वान् अमावास्यां यजते' इति वाक्यद्वयमेव विचारविषयत्वेनोदाहरणम् । यत्तु भाष्यकारेण दर्शपूर्णमासप्रकरणपठितानि बहूनि अङ्गप्रधानवाक्यानि उदाहृत्य किं समप्राधान्यं अङ्गाङ्गिभावो वेति संशयप्रदर्शनं कृतम्, न तद्विचार्यत्वेन, किं तर्हि ? प्रस्तुताधिकरणपूर्वपक्षसिद्धान्तप्रयोजनत्वेनेति मन्तव्यम्, शेषत्वेऽपि विचारस्य करिष्यमाणत्वात् । अत्रायं पूर्वपक्षिणोऽभिसंधिः, विद्वद्वाक्यद्वयप्रतिपादितयोः कर्मणोः आघारादिभ्यस्तावत् अयागरूपेभ्यः शब्दान्तरादेव भेदः, यागरूपेभ्यः आग्नेयादिभ्यः अभ्यासादेव भेदः । अतः पृथगेवेदं कर्मद्वयम् । ननु वर्तमानापदेशरूपत्वात् कर्तृयोगियच्छब्दोपबन्धेनैव विधिरूपतिरस्कारात् नानयोर्विधित्वम्, विध्यभ्यासस्य भेदकत्वयुक्तम्, तत् कथमनयोर्विध्यभावात् कर्मभेदप्रतिपादकत्वम् ? न चैव सति वाक्यद्वयमेतदनर्थकम्, 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्यधिकारवाक्यापेक्षितसमुदायद्वयकरणेन अर्थवत्त्वात् । उच्यते । वर्तमानापदेशरूपत्वेऽपि प्रयोगवचनोपसंग्रहेण पञ्चमलकारनिर्णयादेव अस्य विधित्वम् । तथाहि, प्रयोगवचनप्रतिनिधिमात्रानेन तदेकवाक्यतापन्नमिदं वाक्यद्वयम् । तदेकवाक्यत्वं च तदपेक्षितार्थप्रतिपादने भवति । तदास्य मन्त्रार्थवादरूपत्वाभावात् कर्मविधित्वेनैव निर्णीयते । न च कर्तृयोगियच्छब्देवशब्दाभ्यां विधितिरस्कारः, क्रियाविशेषितकर्तृयोगी हि यच्छब्दो विशेषणीभूतक्रियाविधानपरिकल्पी भवति यथा 'यो दीक्षितो यदग्नीषोमीयं पशुमालभते' इति । अत्र हि दीक्षारूपक्रियाविशेषितकर्तृयोगी यच्छब्दो दीक्षाविधानपरिकल्पी भवति,

वाक्यभेदो भवति । यथा 'वाससा जीणाति' इत्यनेन उत्पन्ने क्रये अदयादिवाक्येन अनेकगुणविधाने । अत्र तु एकेनैव आग्नेयादिपदेन अनावृत्तेन अग्निदेवताविशिष्ट-पुरोडाशादिरूपद्रव्योपस्थानात् प्रत्ययेन च एकदेवता-विधानात् नावृत्तिलक्षणो वाक्यभेदः । यत्र तु रूपपदेन द्रव्यदेवतोपादानम्, यथा 'तावभूतामग्नीषोमावाज्यस्यैव नाभुरांशु पौर्णमास्यां यजन्' इत्यस्य पुराकल्परूपत्वेन अविधायकत्वात् ( ? )।

तदेवं द्विधा पूर्वपक्षः सम्पद्यते । एकत्र आग्नेयादि-वाक्यविहितानि षट् कर्माणि विद्वद्वाक्ययुगलविहितं च कर्मद्वयं इत्यष्टौ कर्माणि । अपरत्र च आग्नेयादिवाक्ये गुणविधानात् विद्वद्वाक्ययुगलविहितकर्मद्वयमेव । तदेवं पूर्वपक्षद्वयेऽपि दर्शपूर्णमासोपपदस्य कस्मिंश्चित् कर्मणि प्रसिद्धत्वात् यजेस्तु यागमात्रविषयत्वेन प्रसिद्धत्वात् यजिसामानाधिकरण्येन यजिमात्रनामत्वम् । तदुक्तम्—

'प्रसिद्धेनाप्रसिद्धस्य नियमेऽपि विशेषणम् ।
तस्माद्यज्यनुरोधेन नामार्थोऽत्र निरूप्यते ॥'

इति ( वा. पृ. ४७६ )। तथा सति प्रकृतयागाना-मेव फले विधानात् सर्वेषामेव प्रयाजानू-याजानामपि समप्रधानत्वमेवेति । नन्वेवं सति प्रधानस्य अनतिदेशात् कथं विकृतौ प्रयाजातिदेशः ? वचनादि-त्युच्यते 'प्रयाजे प्रयाजे कृष्णलं जुहोति' इत्यादि । अत्र प्रयाजानुवादेन कृष्णलहोमविधानादेव इति नानुपपन्नम् । अथ कस्मादेतावेव विद्वद्वाक्ययुगलविहितौ पौर्णमास्यमावास्याशब्दौ ..... फले तयोर्विधानम् ? एवं तर्हि समुदायनामत्वेऽपि तयोरप्यभिधानात् सिद्धान्तेऽपि कथं फले विधानम् ? अथ सिद्धान्ते न शब्दद्वारेण समुदाय-द्वयोपस्थापनम्, किं तर्हि ? कालद्वारेण । एवं तर्हि एक-कर्मद्वयेऽपि अविशिष्टम्, 'पौर्णमास्यां पौर्णमास्या यजेत, अमावास्यायाममावास्यया यजेत' इति वाक्य-द्वयेन कालविधानस्योक्तत्वात् । तेन अनयोरेव फल-वाक्येन विनियोगात् कुतः समप्राधान्यमिति । नैतत् । कालयोगस्य आग्नेयादीनामपि षण्णामविशिष्टत्वेन कथं यागद्वयस्य ग्रहणमिति निर्मितुमशक्यत्वात् । तदुक्तम्—

'षण्णामाग्नेयादियागानामेतयोश्च द्वयोरयम् ।
समानः कालसंयोग इति नेष्टावधारणा ॥' इति

( वा. पृ. ४७७ )। न च वाक्य द्विकर्मपक्षे तावदयं परिहारो न संभवत्येव । अष्टकर्मपक्षेऽपि एवं सति कालद्वारेण अष्टानामेव कर्मणां फले विनियोगो न भविष्यतीति प्रयाजादिभिः सह समप्राधान्यमिति । यतः पूर्वप्रसिद्धं हि सर्वं फलवाक्यमुपादत्ते । न तु फल-सम्बन्धपरं वाक्यम् । उपपदस्यापि वृत्त्यन्तरेण अर्थान्तर-पदत्वमापादयितुमुत्सहते । तदिहापि कालवचनौ दर्शपूर्ण-मासशब्दौ लक्षणया कालयोगिनौ यागान् उपस्थाप-यितुमर्हतः । तेन उपपदस्याप्रसिद्धत्वात् प्रसिद्धार्थयजि-सामानाधिकरण्येन यजर्थत्वमेव निर्णीयते । सिद्धान्ते तु समुदायानुवादस्यैव फलवाक्यस्योपपदप्रसिद्धप्रयोजनत्वात् युक्तं समुदायस्यैव फलविधानम् । न चेह तथा सम-स्तीति पूर्वपक्षद्वयेऽपि समप्राधान्यमेवेति ।

एवं प्राप्ते, अभिधीयते । भवेदेव विध्यभ्यासतः कर्मभेदः, यदि विद्वद्वाक्ययुगलस्य कर्तृयुक्तयच्छब्दस्य एकवाक्ययोगेन अनुवादकत्वं न भवेत् । यत्तु वेदन-कर्तृयोगी यच्छब्दो न यागकर्तृयोगीत्युक्तम् । ( तत्र ) अव्यभिचारेणैव वेदनकर्तृत्वस्य प्राप्तत्वेन यच्छब्दाविशे-षणीयत्वात् । 'यो दीक्षितः' इत्यत्र तु दीक्षितादीक्षित-योरपि यागकर्तृत्वाविशेषात् 'यो दीक्षितः' इत्यविशेष-णम् । न चेह वेदनरहितस्य अचेतनस्य यागकर्तृत्व-मस्तीति यो वेदनकर्ता स यजेतेति विशेषणवैयर्थ्यात् यागकर्तृविशेषणमेव यच्छब्दः । तत्सहचरितश्च एव-शब्दोऽपि तथा, तदनुवादकत्वादविधायकत्वमेवेति । तदु-क्तम्—

'क्रियापदैकयोगित्वे यच्छब्दो न हि ...।
कर्तृयुक्तः स एवास्य भाविनार्थानुवादकृत् ॥' इति ( वा. पृ. ४८८ )।

किञ्च रूपाभावादपि न यागविधायकत्वम् । तत्र भवतु तावत् यथाकथञ्चित् द्रव्यम्, देवतात्वमस्य न कथञ्चिदपि सम्भवति । न च मान्त्रवर्णिकदेवताप्राप्तिः, वाक्यानुवाकयामन्त्रयोः आज्यभागद्वयपठितत्वेन तदर्थत्वा-भावात् । न च वाक्येन तत्र याविरा कर्मद्वयसम्बन्धो भवत्यभ्युपगम्यते, 'वार्त्रघ्नी पूर्णमासेऽनूच्येते वृधन्वती अमावास्यायाम्' इति मुख्यकालवचनत्वे. कर्मसम्बन्धा-

भावात् । तदुक्तम्—‘प्रथमं काल एवाभ्यां शब्दाभ्यां प्रतिपाद्यते । पश्चात्तु कर्म तद्योगादतः कालोऽत्र गृह्यते ॥’ इति ( वा. पृ. ४७८ ) । नापि कालद्वारेण लक्षणया कर्मपरत्वम्, आग्नेयादियोगेन पौर्णमास्यमावास्याकालयोगेन मन्त्रव्यवस्थापकतया मुख्यार्थोपपत्तौ अन्वयेन लाक्षणिकत्वस्वीकारासम्भवात् । न चाल्यमागयोः पौर्णमास्यमावास्याकालस्य प्राप्तत्वात् न मन्त्रव्यवस्थापकत्वं वचनस्येति वाच्यम् । यतः सिद्धान्ते तावत् प्रयोगद्वयेन साङ्गस्यैव पौर्णमास्यमावास्याकाले लब्ध एव । तथा पूर्वपक्षेऽपि सर्वेषां समप्राधान्येन सहचरितानां मध्ये अष्टाना कालसंबन्धस्य श्रुतत्वात् इतरेषामपि कालसम्बन्धे कल्प्यमाने प्रयोगविधितः तत्कालस्यैव बुद्धौ विपरिवृत्तेः तत्कालसम्बन्धमेव कल्पयति । तत्र पौर्णमास्यमावास्या कालयो विनिगमनाप्रमाणाभावात् इच्छावशादनुष्ठाने सति भवति व्यवस्थाऽर्थं वचनम् । यदा पौर्णमास्याख्यभागौ तदा वार्त्रघ्नी अनूच्येते, यदा अमावास्याख्यभागौ तदा वृधन्वती अनूच्येते । अतो मान्त्रवर्णिकदेवताया अभावेन अरूपत्वान्न कर्मविधित्वम् । किञ्च नामावच्छिन्नं हि कर्मद्वयमेतत् विधातव्यम् । न च प्रवृत्तिनिमित्ताभावेन पौर्णमास्यमावास्यापदयोर्नामधेयत्वमस्ति । नापि कालविधिपरे वाक्ये विधास्यमानभाविकालसम्बन्धनिरीक्षणेन नामधेयत्वमिति वाच्यम् । उत्पत्तौ हि नामप्रवृत्तिनिमित्तस्य कालस्य । न च कालविधिपरे वाक्यद्वये सिद्धवाक्यद्वयोदितस्य कर्म प्रतीयते । तेन यथाभूतस्य नामसम्बन्धो न तथाभूतस्य कालसम्बन्धः, यथाभूतस्य कालसम्बन्धो न तथाभूतस्य नामसम्बन्ध इति । अग्निहोत्रादौ तु यथाभूतस्य उत्पत्तिः तथाभूतस्यैव ‘ यदग्नये च प्रजापतये च सायं जुहोति ’ इत्युत्पत्तिवाक्यगतहोमस्वरूपावगमात् वैषम्यादिति नानुपपन्नम् ।

नन्वेवं तर्हि आग्नेयादिवाक्यैरेव देवतामात्रविधानात् रूपवत्त्वो भवति । मैवम्, प्राप्ते कर्मणि द्रव्यदेवतारूपानेकगुणविधाने वाक्यभेदप्रसङ्गात् । न च सत्कारवाक्यपर्यालोचनेन द्रव्यप्राप्तौ देवतामात्रविधानान्न वाक्यभेद इति वाच्यम् । द्रव्यविधानमन्तरेण संस्कारवचनासम्भवात् । अन्यथा ‘ द्रव्याणां कर्मसंयोगे गुणत्वेनाभिसंबन्धः ’ इति न्यायेन प्रधानकर्मत्वापत्ते । किञ्च भवतु तावत् द्रव्यप्राप्तिः, तथापि आग्नेयपदोपात्ताग्निविधाने अष्टाकपालपदोपात्ताष्टत्वविधाने च वाक्यभेदः । तेन यदुक्तं तद्विधानैकपदोपात्तदेवताविशिष्टद्रव्यविधानान्न वाक्यभेद इति, तदपि निरस्तम् । अष्टाकपालपदोपात्ताष्टत्वसंख्याविधानस्य आवश्यकत्वेन वाक्यभेदस्य तदवस्थत्वात् । तथा च सूत्रम्—चोदना वा गुणानां युगपच्छास्त्राच्चोदिते हि तदर्थत्वात्तस्यतस्योपदिश्येत ॥ इति ।

ननु सिद्धान्ते च एकेन वाक्येन द्रव्यदेवतासंबन्धवाल्यागाना विधाने वाक्यभेदः समान एव । न सकलविशेषणविशिष्टैकभावनाविधाने भावार्थतः अभावात् । न चैव सति विशेषणानामविधानम्, विशिष्टविध्यन्यथाऽनुपपत्तिकल्पितविधिभिरेव विशेषणविधानात् । तदुक्तम्—‘श्रौतव्यापारनानात्वे शब्दानामतिगौरवम् । एकोक्त्यवसितानां तु नार्थाक्षेपो विरुध्यते ॥ प्राप्ते कर्मणि नानेको विधातुं शक्यते गुणः । अप्राप्ते तु विधीयन्ते बहवोऽप्येकयत्नतः ॥’ इति ( वा. पृ. ४८९ ) ।

ननु यथा विशिष्टविधिर्विशेषणविधिसापेक्षः तथा विशेषणविधिरपि विशेष्यलाभाय विशिष्टविधिसापेक्ष एव इत्यन्योन्याश्रयात् विशिष्टविधिरपि न सम्भवति । उच्यते । स्यादेव यदि विशिष्टविधिः विशेषणविध्यवगमापेक्षप्रवृत्तिर्भवेत् । किं तर्हि ? आकाङ्क्षितसंनिहितयोग्यविशेषणमात्रसमापेक्षप्रवृत्तिः । तानि च विशेषणानि विशिष्टविधिवाक्ये एव पदप्रतिपादितानि, किन्तु विधिप्रतिपादिता विशिष्टविषयिणी कर्तव्यता न विशेषणानां कर्तव्यतामनासाद्य पर्यवस्यतीति विशेषणकर्तव्यतापेक्षाया पूर्वसिद्धा एव विशेषणविधयः श्रुतार्थापत्त्या कल्प्यन्ते । तेन विशिष्टविधौ विशेषणविधयः पूर्वसंबन्धमात्रेणैव उपयुज्यन्ते । यथा जीवतो गृहाभावे बहिर्भावः । यथा वा शब्दार्थव्युत्पत्तौ व्यक्तौ व्यवहारदर्शनात् प्रथमं व्यक्त्यर्थत्वमाशङ्क्यते । [illegible] आकृत्यर्थत्वं प्रागनवगतमपि सत्तामात्रोपयोगि पश्चात् तु आनन्त्यव्यभिचाराभ्यां व्यक्तेरवाच्यत्वात् आकृतेर्वाच्यत्वं निश्चीयते, न चेतरेतराश्रयत्वम्, उभेहापि । तदुक्तम् — ‘ विशेषण-

गम्यते रूपम्। तस्मात् समुदायशब्दतया आग्नेयादियाग समुदायौ पौर्णमास्यमावास्याशब्दौ बोधयतः। एतावेव समुदायौ दर्शपूर्णमासशब्दाभ्यां अभिधीयेते, फलस्य चाश्च बोध्यते स्वर्गकामपदेन। ततश्च फलवत्सन्निधौ अफलानि आघारादीनि आरादुपकारकाण्यङ्गानि इति सिद्धान्तः।

**विशेषदर्शनाच्च पूर्वेषां समेषु ह्यप्रवृत्तिः स्यात्। ४॥**

आग्नेयादीनां आघारादीनां च समप्राधान्याभावे सिद्धान्ते साधकान्तरमाह। चशब्दः साधकसमुच्चायकः। हि यस्मात् आग्नेयादीनां प्रयाजादीनां च प्रधानतया समेषु सत्सु पूर्वेषां प्रकृतानां प्रयाजादीनां सौर्यादिविकृतौ अप्रवृत्तिः स्यात् प्रवृत्तिर्न स्यात् प्रधानत्वात्। तथापि विकृतौ 'प्रयाजेप्रयाजे कृष्णलं जुहोति' इति कृष्णलहोमादौ विशेषस्य दर्शनात्। तस्मात् न सर्वेषां समप्राधान्यम्।

**गुणस्तु श्रुतिसंयोगात्। ५॥**

'य एवं विद्वान् पौर्णमासीम्' 'य एवं विद्वान् अमावास्याम्' इति विद्वद्वाक्यद्वयं पूर्वोक्ताग्नेयादीनामनुवादकं इति सिद्धान्ते पूर्वपक्षी शङ्कते। तुशब्दः पक्षव्यावृत्त्यर्थः(?) मन्यनस्थाने। आग्नेयादिवाक्ये विद्वद्वाक्यविहितकर्मानुवादेन अग्न्यादिदेवतारूप पुरोडाशादिद्रव्यरूपश्च गुणः विशिष्टविधिना विधीयते। श्रुतिसंयोगात् विद्वद्वाक्य विहितकर्मानुवादक्षमस्य पौर्णमास्यादिरूपस्य शब्दस्य संयोगात् विद्यमानत्वात्। ततश्च विद्वद्वाक्यं विधायकमेव नानुवादकम्।

**चोदना वा, गुणानां युगपच्छास्त्रनाच्चोदिते हि तदर्थत्वात् तस्यतस्योपदिश्येत। ६॥**

'यदाग्नेयोऽष्टाकपालः' इत्यादिवाक्ये द्रव्यदेवतारूपगुणविधि विद्वद्वाक्यविहितकर्मानुवादेन इति यदुक्तं पूर्वपक्षिणा तन्निरस्यति वाशब्दः। चोदना कर्मचोदना आग्नेयादय स्युः न गुणचोदनाः। कुतः? गुणानां युगपत् शासनात् प्राप्ते पौर्णमास्यादिकर्मणि एकेनैव वाक्येन अत्र अनेको गुणो विधातुमिष्यते मन्त्रता। न च शब्दान्तरेण चोदिते कर्मणि अनेको गुणः परस्परसंबन्धे असति शक्यते विधातुम्। हि यस्मात् चोदिते प्राप्ते कर्मणि तदर्थत्वात् गुणार्थत्वात् तस्यतस्य गुणस्य विधेये पुनः पुनः उपदिश्येत उच्चार्येत प्रत्ययः। तच्चानिष्टम्। तस्मात् आग्नेयादिवाक्ये न गुणविधिः। किन्तु कर्मचोदना एव इत्याह सिद्धान्ती।

**व्यपदेशश्च तद्वत्। ७॥**

'त्रीणि ह वा एतानि हवींषि अमावास्यायां भवन्ति आग्नेयं प्रथमम्, ऐन्द्रे (दधिपयसी) उत्तरे' इति त्रयाणां उभयत्रापरपर्यायप्राधान्यव्यपदेशोऽपि तद्वत् गुणविधिपक्षे वाक्यभेदवत् न युज्येत आग्नेयवाक्ये भवत्पक्षे गुणविधित्वेन आग्नेयस्य प्राधान्याभावात्। तस्मात् विद्वद्वाक्यं आग्नेयादीनामनुवादकमेव।

**लिङ्गदर्शनाच्च। ८॥**

'चतुर्दश पौर्णमास्यामाहुतयो हूयन्ते त्रयोदशामावास्यायाम्' इति आहवनीयगततत्प्रकाराहुतिपरिगणनरूप लिङ्गस्य दर्शनादपि आग्नेयादिवाक्यानि कर्मविधायकानि, विद्वद्वाक्यं तु तेषां समुदायत्वेनानुवादः। विद्वद्वाक्ये कर्मान्तरत्वपक्षे अभ्यधिकत्वात् आग्नेयादिवाक्ये गुणविधिपक्षे न्यूनत्वात् त्रयोदशचतुर्दशत्वानुवादविरोधः। सिद्धान्ते तु पञ्च प्रयाजाः द्वावाज्यभागौ स्विष्टकृत् त्रयोऽनूयाजाः पौर्णमास्यां प्रधानाहुतित्रयम्, अमावास्यायां सांनाय्यस्य सहानुष्ठानात् प्रधानाहुतिद्वयम्। इति चतुर्दशत्वत्रयोदशत्वानुवाद उपपन्नः। तस्मात् विद्वद्वाक्यमनुवादकमिति सिद्धम्। के

* प्रकरणं द्विविधं महाप्रकरणं अवान्तरप्रकरणं चेति। तत्र फलभावनायाः प्रकरणं महाप्रकरणम्। तच्च प्रयाजादीनां ग्राहकम्। तच्च प्रकृतावेव। तत्र च उभयाकाङ्क्षारूपं प्रकरणं संभवति, आकाङ्क्षाऽनुपरमात्। विकृतौ तु न प्रकरणं संभवति। तत्र तु अन्यतराकाङ्क्षारूपस्थानादेव अपूर्वाङ्गग्रहणम्। यत्तु विकृतौ प्राकृताङ्गानुवादेन विधीयते, यथा 'औदुम्बरो यूपो भवति' इति यूपानुवादेन औदुम्बरत्वम्, तत् प्रकरणात् गृह्यते। यत्तु विकृतावपि प्राकृतधर्मानुवादेन विधीयमानयोर्धर्मयोरन्तराले अपूर्वमङ्गं केवलं पठ्यते, तदपि प्रकरणेन विनियुज्यते यथा आमनहोमाः। ते हि प्राकृताङ्गानुवादेन विधीयमानयोरन्तराले विधीयन्ते। अवान्तरप्रकरणं तु फलभावनायाः

समिदयागीयफलाकाङ्क्षाविशिष्टत्वेन अतिव्याप्तेश्च । न च प्रधानकथंभावेन तन्नूनपाद्यागीयफलवत्त्वावगमसमकालेन समिद्यागस्यापि फलवत्त्वावगमेन फलाकाङ्क्षोपरमात् तदुत्तरकालीनतन्नूनपाद्यागीयकथंभावाकाङ्क्षाया न तद्वैशिष्ट्य इति वाच्यम् । आलोकपरामर्शजन्यानुमितौ सामानाधिकरण्यसम्बन्धेन अतीतधूमपरामर्शवैशिष्ट्यस्येव उक्तसम्बन्धेन अतीतसमिद्यागीयफलाकाङ्क्षावैशिष्ट्यस्य तन्नूनपाद्यागीयकथंभावाकाङ्क्षायां सत्त्वे बाधकाभावात् । यदि तु धूमपरामर्शजन्यताऽवच्छेदककोटौ उक्तदोषवारणाय स्वाव्यवहितोत्तरत्वसम्बन्धस्यापि निवेशावश्यकत्वात् अत्र समानकालीनत्वसम्बन्धस्यापि निवेशः इत्युच्यते तत्र निर्णीततदङ्गत्वकेति व्यर्थम् , अङ्गकथंभावाकाङ्क्षाया उक्तसम्बन्धेन अतीतप्रधानफलाकाङ्क्षावैशिष्ट्यविरहेण अतिव्याप्त्यभावात् , तस्य तद्वारकत्वेन त्वदभिप्रेतत्वात् । न द्वितीय. अङ्गकथंभावाकाङ्क्षायाः प्रधानविनियोगककल्पयोग्यप्रकरणत्वेऽपि प्रधानफलाकाङ्क्षारूपसहकारिविरहात् तन्नूनपाद्याग कथंभावाकाङ्क्षायाः समिद्यागविनियोजकप्रकरणत्वेऽपि समिद्यागफलाकाङ्क्षारूपसहकारिविरहादेव अङ्गत्वप्रवङ्गवारणोपपत्तौ फलाकाङ्क्षावैशिष्ट्यनिवेशस्य, निर्णीतत्वदन्तरनिवेशस्य च व्यर्थत्वात् । तदुभयनिवेशेऽपि प्रयाजादीनां प्रोक्षणाद्यङ्गत्ववारणाय फलाकाङ्क्षायाः सहकारित्वकल्पनायाः आवश्यकत्वात् इति दिक् ।

एतस्य च प्रकरणस्य आकाङ्क्षारूपत्वेन स्वतः अप्रमाणत्वात् वाक्यकल्पनाद्वारैव प्रामाण्यम् । तथाहि, प्रधानगतेतिकर्तव्यताऽऽकाङ्क्षया प्रयाजादिगतप्रयोजनाकाङ्क्षासहकृतया प्रयाजवाक्यस्य, प्रधानवाक्यस्य च स्वस्वार्थान्तरवाक्यार्थसमाप्तस्यापि महावाक्यैकदेशत्वरूपदर्शपूर्णमासवाक्यस्य सन्निधिरूपं वाक्यं कल्प्यते । उपकारिभाविकपदानामपि स्वार्थोपस्थितिद्वारा तद्विशेषणपदान्तरकल्पनाऽनुकूलयोग्यतारूपलिङ्गानुमानद्वारा इतिकर्तव्यतात्वावच्छिन्नमित्यादिगौणश्रुतिकल्पकत्वं इति परम्परया प्रकरणस्य अङ्गत्वे प्रामाण्यम् । वाक्यैकवाक्यतापन्नप्रकारश्च ' समिधो यजति, इत्यं दर्शपूर्णमासाभ्यां यजेत ' इति । अत एव दर्शपूर्णमासप्रकरणाम्नातेन ' सवाप्य पौर्णमासीं वैमृधमनुनिर्वपेत् ' इत्यनेन विहितवैमृधस्य प्रकरणात् दर्शपूर्णमासोभयाङ्गत्वप्रसक्तौ वाक्यात् पौर्णमास्यङ्गत्वं इत्युक्तं वाक्याधिकरणे । इति प्रकरणनिरूपणम् । मुरारि. पृ. ११८१–११८५.

* प्रकरणं प्रक्रमः । तस्य लोकवेदयोः अर्थज्ञानोपायत्वं प्रसिद्धम् । मु. पृ. १११. * प्रकरण प्रमाणान्तरम् । वा. २।३।७।१४ पृ. ८५२. * प्रकरण बाधित्वा वाक्येन ( आम्नायेयप्रकरणे समाम्नातानि पवमानहवींषि ) अग्नेः ( गुणभूतानि ) भवन्ति । भा. ३।१।१२।२२. * प्रकरणं बाधित्वा वाक्येन द्वादशोपसत्ता अहीनस्यैव, न ज्योतिष्टोमस्य । ३।३।८। १५–१६. * प्रकरणम् । महाप्रकरण प्रधानस्य असंदष्टोद्भूतिक प्रकृतेः, विकृतेस्तु संदष्टोद्भूतिकम् । बाल पृ ११. * प्रकरण मुख्यत्वेन नाम्नानाम् । वि. ३।७।२. * प्रकरण यत्र प्राकृतवदनुवादेन विधिः सदंशो वा तत्रैव विकृतौ विनियोजकम्, अन्यत्र तु सन्निधिरेव । बाल. पृ. ११. * प्रकरण युगपत् सर्वाङ्गग्राहि । भाट्ट. १०।७।९ पृ. ८१. * प्रकरण वाक्येन अविरुद्ध अर्थवद् भवति । भा. ३।४।१।९, * प्रकरण वाक्येन बाध्यते । पशुरग्नीषोमीयो वाक्येन, शङ्कगोहिते पशोः प्रकरणेन भवेताम् । ४।१।१२।२७. * प्रकरणं वाक्यलिङ्गश्रुतीः कल्पयित्वा विनियोजकम् । वाक्यं तु लिङ्गश्रुती द्वे एव कल्पयित्वा विनियोजकं इति शीघ्रोपस्थापकत्वात् वाक्यं प्रकरणाद् बलीयः । वि ३।३।९. * प्रकरण विनियोजकम् । प्रकरणाधिकरणम् । ३।३।४. * प्रकरणं श्रुतस्य द्रव्यस्य बाधने नहि समर्थम् । भा. ३।४।१०।१८ पृ. ९८७ । यदा द्रव्यस्य अन्यादिसम्बन्धो विधीयते, न तदा प्रकरणापेक्षेत्यर्थः । वा. * प्रकरणं सन्निहितस्य पठनतः अनारभ्याद्यनाकपदार्थविषये इतिकर्तव्यतात्वेन अपेक्षणम् । ( पददृत्यं तु प्रकरणाधिकरणविन्दौ भाट्टे एव द्रष्टव्यम् ) । भाट्ट. ३।३।४. * प्रकरणं समाख्यानात् बलवत् । पौरोडाशिकसमाख्यातब्राह्मणपाठानां प्रयाजादीनां समाख्याप्राप्तमपि केवलौपवसथ्यत्वं दूरीकृत्य प्रकरणेन सानाय्यदर्शपूर्णमासार्थत्वमपि सिध्यति । मीन्या * प्रकरण साकाङ्क्षककलसन्निधिः । सु. पृ. १४७७. * प्रकरणं सामान्यम्, निमित्तसंयोगो

व्यनक्ति । तद्विशेषिणश्च यवतिजुहोत्यादयोऽपि नार्थान्तरे वर्तन्ते । नार्थान्तरेण विना किञ्चिदनर्थकं भवति । न च प्रतनिधानं तेषु न सम्भवति । यावज्जीवादिविधिभिः सह तुल्यबलत्वेन विकल्पोपपत्तेः । यो वै तेषां क्रमप्रयोगः, तस्य अनवगतफलविशेषत्वात् मासपरिमाणविधानमित्य-दोषः । प्रकरणस्य च वाक्यं बाधकमिष्टमेव । अथवा दीक्षितत्वनिमित्तेन प्रतिषिद्धानामपि मासमग्निमतः प्रति-प्रसवः । स तु प्रयोगमध्ये एव क्रियते । अथवा तान्येवाग्निहोत्रादीनि अत्र पर्युदस्याप्य सोमयागसहितानि समप्रयोगवचनेन फले विधीयन्ते । नहि केवलभोजी देवदत्तः अन्यैः सह पङ्क्त्या भुञ्जानः अन्यत्र प्रविशते । न च फलान्तरसम्बन्धः कर्मान्तरत्वेन विना न घटते इत्युक्तं अवेष्ट्यधिकरणे ( २।३।१ ) । न चावश्यमत्रैव फलकल्पना गन्तव्यम् । प्रधानमपि हि अनभिपूर्णे करणांशे स्वशब्देन विधीयमानं न विरुध्यते । तस्मादेवमपि तान्येवाग्निहोत्रादीनि । इति प्राप्ते, उच्यते । 'उपसद्रूपः परं होत्रमग्निहोत्रं विधीयते । न च नैयमिकसंवाः सन्तीत्येतेन भिन्नता ॥' यदि हि मास. कुण्डे विधीयेत, ततः पूर्वकर्मानुवादे बुद्धिमवेदपि, न त्वेतदस्ति । उपसदुत्तरकालत्वेन श्रवणात् विद्यमानाभि-रुपसद्भिः शक्यः कालो लक्षयितुम् । न च नैमित्तिके ताः स्वार्थाः परार्था वा क्रियन्ते । यदि तु ताः तदुत्तरकालत्व मासश्च विधीयेरन्, एवं सति अनेकार्थविधानात् वाक्य-भेदः स्यात् । एतस्मादेव हेतोः दीक्षितदानहोमपाक-प्रतिषेधेन प्रतिषिद्धस्य प्रतिप्रसवरूपेण वा तदेकदेशत्वेन वा अयं विधिः प्रत्युक्तः । तत्रापि हि उपसदुत्तरकालत्व मासश्च इत्यनेकार्थत्वमेव । कर्मान्तरविधाने तु अनेकार्थ त्वमदोषः । तस्मात् कर्मान्तरमिति सूत्रकार. ।

इदं त्विह वक्तव्यम् । यदि वाक्यभेदप्रसङ्गात् कर्मान्तरत्वम्, एवं तर्हि स एव भेदहेतु प्राप्नोति, न प्रकरणान्तरम् । अथवा गुणादेव अनेनाव्यक्तत्वेन पूर्वेणा-सम्भवात् भेद इति प्रकरणान्तरानवकाशः । तथाहि, 'यद्यपि प्रकृते तस्मिन्नग्निहोत्रे भवेदिदम् । तथा-ऽप्यसंभवात्तस्मिन् भूयान् कर्मान्तरं गुण. ॥' किञ्च 'अग्निहोत्रस्य चैतेन भेदः क्लेशेन संभवेत् । उत्तरेषां तु नैव स्यादुपसत्संगतेर्विना ॥' 'मास दर्शपूर्णमासाभ्यां यजते' इत्यादिषु हि केवलमासस्य सम्बन्ध-विधानाच्च वाक्यभेदः प्राप्नोतीति अकर्मान्तरत्वप्रसङ्गः । तदेतत् स्यात् । इहापि 'उपसद्भिश्चरित्वा' इत्यनुषङ्गा-दग्निहोत्रानुसङ्क्रमिति । तदयुक्तम् । कुतः ? 'विना यत्रानुषङ्गेण भवेच्छ्रुतिरनर्थिका । तत्रैव ह्याकाङ्क्षा-र्थानामनुषङ्गो न चेह सः ॥' तत्रानुषङ्गो युक्तः, यत्र तेन विना न किञ्चिदुक्तं भवति । यथा अत्रैव 'मास वैश्वदेवेन' इत्यादिषु यावत् 'यजते' इति नानुषज्यते, तावत् न किञ्चिदुक्त इत्यवश्यमनुषक्तव्यम् । इह पुनः दर्शपूर्णमासादिवाक्यानि तावत् स्वपदैरेव निराकाङ्क्षी-भूतानि । 'उपसद्भिश्चरित्वा' इत्ययमपि पूर्वेणैव चरितार्थ-त्वान्न किञ्चिदपेक्षते । तत्र न कश्चिदपि हेतुरस्ति, येना-नुषज्येत । यस्तु वाक्यभेदप्रसक्त्यर्थमेव अनुषङ्गमिच्छेत्, कुर्यादपि स. ( अनुषङ्गम् ) । तत्र तु पुनः पुनः चरित्वा इत्यस्य विधानात् यावदनुषङ्गं उपसत्समनुष्ठानं प्राप्नोति । अनिष्टं चैतत्, वेदाभ्यनुज्ञानाभावात् । अथ अग्नि होत्रस्यैव पुरस्तात् कृताभिः सर्वानुषङ्गार्थसम्पादनं इष्यु-च्येत, तथा सति शब्दोच्चारणमपि एवमेव अवस्थित अग्निहोत्रादीनां पाठक्रमानुरोधेन अपनीयेत इति नार्थः अनुषङ्गेण । तस्मात् नैतत् व्याख्यानमुपपद्यते । इति एवं वर्णनीयम् 'उपादेयो गुणो यत्र भवेत् प्रकरणान्तरे । तत्र कर्मान्तरं युक्तमुद्देश्ये त्वन्य-कर्मता ॥' इह तावत् नैव प्रकरणान्तरसद्भावात् भेदः अवगम्यते । किं तर्हि ? पूर्वप्रकरणविच्छेदात् । अप्रति-षध्यमाने हि पूर्वकर्मणि केनापि प्रकारेण उत्तरस्य भेदः प्रतीयते । न तु प्रकरणान्तरं सदपि किञ्चिदुप-करोति । तथा च 'फलं चाकर्मसंनिधौ' इत्यत्र वक्ष्याम. । अनेन च विच्छिन्नप्रकरणस्य कर्मणः सन्निधि द्विप्रकारः श्रूयते उपादेयमनुपादेयं च । तत्र यदुपादेयं यथा आहवनीयप्रतिपदादि, तत् प्रदेशान्तरस्थोद्देशेनापि तस्य विधातुम् । यत्तु अनुपादेयं देशकालनिमित्तफल-संस्कार्यात्मकम्, तस्य प्रदेशान्तरावस्थितस्य कर्म प्रति विध्यसम्भवेऽपि वचनव्यक्तिर्भवति 'तत्रैव कर्म कर्तव्यम्'

